तं वा ऽअष्टासु विक्रमेष्वादधीत । अष्टाऽक्षरा वै गायत्री गायत्र्यैवैतद्दिवमुपोत्क्रामति ॥ २३ ॥ एकादशस्वादधीत । एकादशाऽक्षरा वै त्रिष्टुप् त्रिष्टुभैवैतद्दिवमुपोत्क्रामति ॥ २४ ॥ द्वादशस्वादधीत । द्वादशाऽक्षरा वै जगती जगत्यैवैतद्दिवमुपोत्क्रामति नाऽत्र मात्राऽस्ति यत्रैव स्वयं मनसा मन्न्येत तदादधीत स यद्वा ऽअप्प्यल्पकमिव प्प्राङ्क्रमुद्धरति तेनैव दिवमुपोत्क्रामति ॥ २५ ॥ तदाहुः । आहवनीये हवीᳬंषि श्रपयेयुरतो वै देवा दिवमुपोदक्राँमस्तेनो ऽएवाऽर्च्चन्तः श्राम्म्यन्तश्चेरुस्तस्मिन्हवीᳬंषि श्रपयाम तस्मिन्यज्ञं तनवामहा ऽइत्य पस्खल ऽइव ह स हविषां यद्ग गार्हपत्ये श्रपयेयुर्य्यज्ञ ऽआहवनीयो यज्ञे यज्ञं तनवामहा ऽइति ॥ २६ ॥ उतो गार्हपत्य ऽएव श्रपयन्ति । आहवनीयो वा ऽएष न वा ऽएष तस्मै यदस्मिन्नश्रृतᳬं श्रपयेयुस्तस्मै वा ऽएष यदस्मिञ्छृतं जुहुयुरित्यतो यतरथा कामयेत तथा कुर्य्यात् ॥ २७ ॥ स हैष यज्ञ ऽउवाच । नग्नताया वै बिभेमीति का तेऽनग्नतेत्यभित ऽएव मा परिस्तृणीयुरिति तस्मादेतदग्निमभितः परिस्तृणन्ति तृष्णाया वै बिभेमीति का ते तृप्तिरिति ब्राह्मणस्यैव तृप्तिमनु तृप्प्येयमिति तस्मात्सᳬंस्थिते यज्ञे ब्राह्मणं तर्प्पयितवै ब्रूयाद्यज्ञमेवैतत्तर्प्पयति ॥ २८ ॥

सप्तमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥



प्रजापतिर्ह वै स्वां दुहितरमभिदध्यौ । दिवं वोषसं

वा मिथुन्न्येनया स्यामिति ताᳫं सम्बभूव ॥ १ ॥ तद्वै देवानामाग ऽआस । य ऽइत्थᳫं स्वां दुहितरमस्माकᳫं स्वसारं करोतीति ॥ २ ॥ ते ह देवा ऽऊचुः । योऽयं देवः पशूनामीष्टेऽतिसन्धं वा ऽअयं चरति य ऽइत्थᳫं स्वां दुहितरमस्माकᳫं स्वसारं करोति विध्येममिति तᳩ रुद्रोऽभ्यायत्य विव्याध तस्य सामि रेतः प्रचस्कन्द तथेन्नूनं तदास ॥ ३ ॥ तस्मादेतदृषिणाऽभ्यनूक्तम् । पिता यत्स्वां दुहितरमधिष्कन् क्ष्मया रेतः सञ्जग्मानो निषिञ्चदिति तदाग्निमारुतमित्युक्थं तस्मिँस्तद्व्याख्यायते यथा तद्देवा रेतः प्राऽजनयँस्तेषां यदा देवानां क्रोधो व्यैदथ प्रजापतिमभिषज्यँस्तस्य तᳩ शल्यं निरकृन्तन्त्स वै यज्ञ ऽएव प्रजापतिः ॥४॥ ते होचुः । उपजानीत यथेदन्नाऽमुयाऽसत्कनीयो ह्याऽऽहुतेर्यथेदᳫं स्यादिति ॥५॥ ते होचुः । भगायैनद्दक्षिणत ऽआसीनाय परिहरत तद्भगः प्राशिष्यति तद्यथाऽहुतमेवं भविष्यतीति तद्भगाय दक्षिणत ऽआसीनाय पर्य्याजह्रुस्तद्भगोऽवेक्षाञ्चक्रे तस्याऽक्षिणी निर्ददाह तथेन्नूनं तदास तस्मादाहुरन्धो भग ऽइति ॥ ६ ॥ ते होचुः । नो न्वेवाऽत्राऽशमत्पूषण ऽएनत्परिहरतेति तत्पूष्णे पर्य्याजह्रुस्तत्पूषा प्राऽऽश तस्य दतो निर्जघान तथेन्नूनं तदास तस्मादाहुरदन्तकः पूषेति तस्माद्यं पूष्णे चरुं कुर्वन्ति प्रपिष्टानामेव कुर्वन्ति यथाऽदन्तकायैवम् ॥ ७ ॥ ते होचुः । नो न्वेवाऽत्राऽशमद् बृहस्पतय ऽएनत्परिहरतेति तद् बृहस्पतये पर्य्याजह्रुः स बृहस्पतिः सवितारमेव प्रसवायोपाऽ-

धावत्सविता वै देवानां प्प्रसवितेदम्मे प्प्रसुवेति तदस्मै सविता प्प्रसविता प्प्राऽसुवत्तदेनꣳ सवितृप्प्रसूतं नाऽहिनत्ततोऽर्वाचीनꣳ शान्तं तदेतन्निदानेन यत्प्राशित्रम्† ॥ ८ ॥ स यत्प्राशित्रमवद्यति । यदेवाऽत्राऽविद्धं यज्ञस्य यद्रुद्रियं तदेवैतन्निर्म्मिमीतेऽथाऽप ऽउपस्पृशति शान्तिरापस्तदाद्भिꣳ शमयत्यथेडां पशून्त्समवद्यति ॥ ९ ॥ स वै याव-न्मात्रमिवैवाऽवद्येत् । तथा शल्यꣳ प्प्रच्च्यते तस्माद्याव-न्मात्रमिवैवाऽवद्येदन्न्यतरत ऽआज्यं कुर्य्यादधस्ताद्वोपरि-ष्टाद्वा तथा खदन्निस्सरणवद्भवति तथा निस्रवति तस्मा-दन्न्यतरत ऽआज्ज्यं कुर्य्यादधस्ताद्वोपरिष्टाद्वा ॥ १० ॥ स ऽआज्ज्यस्योपस्तीर्य्य । द्विर्हविषोऽवदायाऽथोपरिष्टादाज्ज्यस्याऽभिघारयति तद्यथैव यज्ञस्याऽवदानमेवमेव तत् ॥११॥ तन्न पूर्व्वेण परिहरेत् । पूर्व्वेण हैके परिहरन्ति पुरस्ताद्वै प्रत्यञ्चो यजमानं पशव ऽउपतिष्ठन्ते रुद्रियेण ह पशून्प्रसजेद्यत्पूर्व्वेण परिहरेत्तेऽस्य गृहाꣳ पशव उपमूर्य्यमाणा ऽईयुस्तस्मादित्त्येव तिर्य्यक्प्रजिहीत तथा ह रुद्रियेण पशून्न प्प्रसजाति तिर्य्यगेवैनं निर्म्मिमीते ॥ १२ ॥ तत्प्रतिगृह्णाति । 'देवस्य त्वा सवितुꣳ प्प्रसवेऽश्विनोर्बाहुभ्याम्पूष्णो हस्ताभ्यां प्रतिगृह्णामी'ति ॥ १३ ॥ तद्यथैवाऽदो बृहस्पतिꣳ । सवितारं प्रसवायोपाऽधावत्सविता वै देवानां प्रसवितेदं मे प्प्रसुवेति तदस्मै सविता प्प्रसविता प्प्राऽसुवत्तदेनꣳ सवितृप्प्रसूतं

---

† ब्रह्मणो भागः प्राशित्रमिति ।

( १ ) [illegible] ११ ( २ ) शु० सं० अ० २ क० ११ ।

नाऽहिनदेवमैवैष ऽएतत्त्सवितारमेव प्प्रसवायोपधावति सविता वै देवानां प्रसवितेदं मे प्प्रसुवेति तदस्मै सविता प्प्रसविता प्प्रसौति तदेनꣳ सवितृप्प्रसूतं न हिनास्ति॥१४॥ तत्प्राश्नाति। 'अग्नेष्ट्वास्येन प्प्राश्नामी'ति न वा ऽअग्निं किंचन हिनास्ति तथो हैनमेतन्न हिनास्ति ॥ १५ ॥ तन्न दद्भिꣳ खादेत्। नेन्म ऽइदꣳ रुद्रियं दतो हिनसदिति तस्मान्न दद्भिꣳ खादेत् ॥ १६ ॥ अथाऽप ऽआचामति। शान्तिराप-स्तदद्भिꣳ शान्त्या शमयतेऽथ परिक्षाल्य पात्रम् ॥ १७ ॥ अथाऽस्मै ब्रह्मभागं पर्य्याहरन्ति। ब्रह्मा वै यज्ञस्य दक्षिणत ऽआस्तेऽभिगोप्ता स ऽएतं भागं प्रतिविदान् ऽआस्ते यत्प्राशित्रं तदस्मै पर्य्याहार्षुस्तत्प्राऽऽशीदथ यमस्मै ब्रह्म-भागं पर्य्याहरन्ति तेन भागी स यदत ऽऊर्द्ध्वमसꣳस्थितं यज्ञस्य तदभिगोपायति तस्माद्वा ऽअस्मै ब्रह्मभागं पर्य्या-हरन्ति ॥ १८ ॥ स वै वाचंयम ऽएव स्यात्। ब्रह्मन्प्रस्था-स्यामीत्येतस्माद्वचसो विवृहन्ति वा ऽएते यज्ञं क्षण्वन्ति ये मद्ध्ये यज्ञस्य पाकयज्ञियेडया चरन्ति ब्रह्मा वा ऽऋ-त्विजां भिषक्तमस्तद्ब्रह्मा सन्दधाति न ह सन्दद्ध्याद्यद्वाऽव-द्यमान ऽआसीत तस्माद्वाचंयम ऽएव स्यात् ॥ १९ ॥ स यदि पुरा मानुषीं वाचं व्याहरेत्। तत्रो वैष्णवीमृचं वा यजुर्वा जपेद्यज्ञो वै विष्णुस्तद्यज्ञं पुनरारभते तस्यो हैषा प्प्रायश्चित्तिꣳ ॥२०॥ स यत्राऽऽह ब्रह्मन्प्रस्थास्यामीति तद् ब्रह्मा जप'त्येतं ते[2] देव सवितर्य्यज्ञं प्राऽऽहु'रिति तत्सवितारं

(१) शु० सं० अ० २ क० ११। (२) शु० सं० अ० २ क० १२।

प्रसवायोपधावति स हि देवानां प्रसविता 'बृह[1]स्पतये ब्रह्मण' ऽइति बृहस्पतिर्वै देवानां ब्रह्मा तद्य ऽएव देवानां ब्रह्मा तस्मा ऽएवैतत्प्राऽऽह तस्मादाह बृहस्पतये ब्रह्मण ऽइति 'ते[2]न यज्ञमव तेन यज्ञपतिं तेन मामवे'ति नाऽत्र तिरोहितमिवाऽस्ति ॥ २१ ॥ 'मनो जू[3]तिर्ज्जुषतामाज्यस्ये'ति । मनसा वा ऽइदꣳ सर्वमाप्तं तन्मनसैवैतत्सर्वमाप्नोति बृहस्पतिर्य्यज्ञमिमं तनोत्वरिष्टं यज्ञꣳ समिमं दधात्वि'ति यद्विवृढं तत्सन्दधाति 'विश्वे देवास ऽइह मादयन्तामि'ति सर्वं वै विश्वे देवाः सर्वेणैवैतत्सन्दधाति स यदि कामयेत ब्रूया'त्[6]प्रतिष्ठेति' यद्यु कामयेताऽपि नाऽऽद्रियेत ॥ २२ ॥

सप्तमाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

इति सप्तमोऽध्यायः ॥ ७ ॥

मनवे ह वै प्प्रातः । अवनेग्यमुदकमाजह्रुर्य्यथेदं पाणिभ्यामवनेजनायाऽऽहरन्त्येवं तस्याऽवनेनिजानस्य मत्स्यः पाणी ऽआपेदे ॥ १ ॥ स हाऽस्मै वाचमुवाद । बिभृहि मा पारयिष्यामि त्वेति कस्मान्मा पारयिष्यसीत्त्यौघ ऽइमाः सर्वाः प्प्रजा निर्वोढा ततस्त्वा पारयिताऽस्मीति कथं ते भृतिरिति ॥ २ ॥ स होवाच । यावद्वै क्षुल्लका भवामो बह्वी वै नस्तावन्नाष्ट्रा भवत्त्युत मत्स्य ऽएव मत्स्यं गिलति

(१) शु० सं० अ० २ क० १२। (२) शु० सं० अ० २ क० १२। (३) शु० सं० अ० २ क० १३। (४) शु० सं० अ० २ क० १३। (५) शु० सं० अ० २ क० १३। (६) शु० सं० अ० २ क० १३।

कुम्भ्यां माऽग्रे बिभरासि स यदा तामतिवर्द्धा ऽअथ कर्षूं* खात्वा तस्यां मा बिभरासि स यदा तामतिवर्द्धा ऽअथ मा समुद्रमभ्यवहरासि तर्हि वा ऽअतिनाष्ट्रो भविताऽस्मीति ॥ ३ ॥ शश्वद्ध झष ऽआस । स हि ज्येष्ठं वर्द्धतेऽथेतिथीꣳ समां तदौघ ऽआगन्ता तं मा नावमुपकल्प्योपाऽऽसासै स ऽऔघ ऽउत्थिते नावमापद्यासै ततस्त्वा पारयिताऽस्मीति ॥ ४ ॥ तमेवं भृत्वा समुद्रमभ्यवजहार । स यतिथीं तत्समां परिदिदेश ततिथीꣳ समां नावमुपकल्प्योपाऽऽसाञ्चक्रे स ऽऔघ ऽउत्थिते नावमापेदे तꣳ स मत्स्य ऽउपन्न्यापुप्लुवे तस्य शृङ्गे नावः पाशं प्रतिमुमोच तेनैतमुत्तरं गिरिमधिदुद्राव ॥ ५ ॥ स होवाच । अपीपरं वै त्वा वृक्षे नावं प्रतिबध्नीष्व* तं तु त्वा मा गिरौ सन्तमुदकमन्तश्छैत्सीद्यावदुदकꣳ समवाऽयात्तावत्तावदन्ववसर्प्पाऽसीति स ह तावत्तावदेवाऽन्ववससर्प्प तदुप्येतदुत्तरस्य गिरेर्म्मनोरवसर्प्पणमित्यौघो ह ताः सर्वाः प्रजा निरुवाहाऽथेह मनुरेवैकः परिशिशिषे ॥ ६ ॥ सोऽर्चञ्छ्राम्यंश्चचार प्रजाकामः । तत्राऽपि पाकयज्ञेनेजे स घृतं दधि मस्त्वामिक्षामित्यप्सु* जुहवाञ्चकार ततः संवत्सरे योषित्सम्बभूव सा †हपिब्दमानेवोदेयाय तस्यै

* कर्षूः खातिका इत्यर्थः ।

* (क) पुस्तके 'प्रबध्नीष्व' इति ।

* गव्यम्पय उष्णं कृत्वा तप्ते पयसि दधि प्रक्षिप्तं चेत् तदा तत्पयो द्विधा भवति घनीभूतं द्रवीभूतञ्च । तत्र यो घनीभूतोंऽशस्तद्वाजिनम् , यो द्रवीभूतोंऽशस्तच्च 'आमिक्षा' इति पदैर्व्यवह्रियते ।

† 'पिब्दमाना' पाकधर्मात्मिका इव सा योषिदित्यर्थः ।

ह स्म घृतं पदे सन्तिष्ठते तया मित्रावरुणौ सञ्जग्माते ॥ ७ ॥ ताᳫं होचतुः काऽसीति । मनोर्दुहितेत्यावयोर्ब्रूष्वेति नेति होवाच य एव मामजीजनत तस्यैवाऽहमस्मीति तस्यामपित्वमीषाते तद्वा जज्ञौ तद्वा न जज्ञावतित्वेवेयाय सा मनुमाजगाम ॥ ८ ॥ ताᳫं ह मनुरुवाच काऽसीति । तव दुहितेति कथं भगवति मम दुहितेति या अमूरप्स्वाहुतीरहौषीर्घृतं दधि मस्त्वामिक्षां ततो मामजीजनथाः साऽऽशीरस्मि तां मा यज्ञेऽवकल्पय यज्ञे चेद्वै माऽवकल्पयिष्यसि बहुः प्रजया पशुभिर्भविष्यसि ‡यामु मया काञ्चाऽऽशिषमाशासिष्यसे सा ते सर्वा समर्द्धिष्यत इति तामेतन्मध्ये यज्ञस्याऽवाऽकल्पयन्मध्यᳫं ह्येतद्यज्ञस्य यदन्तरा प्रयाजाऽनुयाजान् ॥ ९ ॥ तयाऽर्च्चञ्छ्राम्यँश्चचार प्रजाकामः । तयेमां प्रजातिं प्रजज्ञे येयं मनोः प्रजातिर्यांम्वेनया काञ्चाऽऽशिषमाशास्त साऽस्मै सर्वा समार्ध्यत ॥ १० ॥ सैषा निदानेन यदिडा*। स यो हैवं विद्वानिडया चरत्येताᳫं हैव प्रजातिं प्रजायते यां मनुः प्राऽजायत याम्वेनया काञ्चाऽऽशिषमाशास्ते साऽस्मै सर्वा समृध्यते ॥ ११ ॥ सा वै पञ्चाऽवत्ता भवति । पशवो वा इडा पाङ्क्ता वै पशवस्तस्मात्पञ्चाऽवत्ता भवति ॥ १२ ॥ स समवदायेडाम् । पूर्वार्द्धं पुरोडाशस्य प्रशीर्य पुरस्ताद्ध्रुवायै निदधाति ताᳫं होत्रे प्रदाय

‡ 'याममुया' इति 'ग–च' पुस्तके समुपलभ्यते ।

* इडाशब्देन इडापात्र्यावत्तं पुरोडाशादि–द्रव्यमुच्यते ।

दक्षिणाऽत्त्येति ॥ १३ ॥ स होतुरिह निलिम्पति । तद्धोतौष्ठयोर्न्निलिम्पते 'मनसस्पतिना ते हुतस्याऽश्नामीषे प्प्राणाये'ति ॥ १४ ॥ अथ होतुरिह निलिम्पति । तद्धोतौष्ठयोर्न्निलिम्पते 'व्वाचस्पतिना ते हुतस्याऽश्नाम्म्यूर्ज्ज ऽउदानाये'ति ॥ १५ ॥ एतद्ध वै मनुर्विभयाञ्चकार । इदं वै मे तनिष्ठं यज्ञस्य यदियमिडा पाकयज्ञिया यद्वै म ऽइह रक्षाᳬसि यज्ञं न हिᳬस्युरिति तामेतत्पुरा रक्षोभ्यः पुरा रक्षोभ्य ऽइत्त्येव प्प्रापयत तथो ऽएवैनामेष ऽएतत्पुरा रक्षोभ्यः पुरा रक्षोभ्य ऽइत्त्येव प्प्रापयतेऽथ यत्प्रत्यक्षं न प्प्राऽश्नाति नेदनुपहूतां †प्राऽश्नानीत्त्येतद्वैनां प्प्रापयते यदोष्ठयोर्न्निलिम्पते ॥ १६ ॥ अथ होतुः पाणौ समवद्यति । समवत्तामेव सतीं तदेनां प्रत्यक्षः होतरि श्रयति तयात्समञ्छृतया होता यजमानायाऽऽशिषमाशास्ते तस्माद्धोतुः पाणौ समवद्यति ॥ १७ ॥ अथोपाᳬशूपह्वयते । एतद्ध वै मनुर्विभयाञ्चकारेदं वै मे तनिष्ठं यज्ञस्य यदियमिडा पाकयज्ञिया यद्वै म ऽइह रक्षाᳬसि यज्ञं न हन्न्युरिति तामेतत्पुरा रक्षोभ्यः पुरा रक्षोभ्य ऽइत्त्येवोपाᳬशूपाऽऽह्वयत तथो ऽएवैनामेष ऽएतत्पुरा रक्षोभ्यः पुरा रक्षोभ्य ऽइत्त्येवोपाᳬशूपह्वयते ॥ १८ ॥ स ऽउपह्वयते । 'उपहूतः रथन्तरः सह पृथिव्व्योप माᳬ रथन्तरः सह पृथिव्व्या ह्वयतामुपहूतं वामदेव्व्यः सहाऽन्तरिक्षेणोप मां वाम-

† 'प्राश्नामि' इति 'ग—च' पुस्तके ।

( १–२ ) तै० सं० २. ६. ८ । ( ३ ) तै० ब्रा० ३. ५. १३ ।

देव्व्यचः सहाऽन्तरिक्षेण ह्वयतामुपहूतं बृहत्सह दिवोप-
मां बृहत्सह दिवाऽऽह्वयतामिति' तदेतामेवैतदुपह्वयमान
ऽइमाँश्च लोकानुपह्वयत ऽएतानि च सामानि ॥ १९ ॥
'उपहूता गावः सहर्षभा' ऽइति । पशवो वा ऽइडा तदेनां
परोऽक्षमुपह्वयते सहर्षभा ऽइति समिथुनामेवैनामेतदु-
पह्वयते ॥ २० ॥ 'उपहूता सप्तहोत्रे'ति । तदेनाᳬं सप्तहोत्रा
सौम्म्येनाऽध्वरेणोपह्वयते ॥ २१ ॥ 'उपहूतेडा ततुरि'रिति ।
तदेनां प्रत्यक्षमुपह्वयते ततुरिरिति सर्व्वᳬं ह्येषा पाप्मानं
तरति तस्मादाह ततुरिरिति ॥ २२ ॥ 'उपहूतः सखा भक्ष'
ऽइति । प्प्राणो वै सखा भक्षस्तत्प्राणमुपह्वयत ऽउपहूतः
हेगिति तच्छरीरमुपह्वयते तत्सर्व्वमुपह्वयते ॥ २३ ॥ अथ
प्प्रतिपद्यते । 'इडोपहूतोपहूतेडोपो ऽअस्माँ२॥ ऽइडा ह्वयता-
मिडोपहूते'ति तदुपहूतामेवैनामेतत्सतीं प्रत्यक्षमुपह्वयते सा
वै साऽऽसीद् गौर्व्वै साऽऽसीच्चतुष्पदी वै गौस्तस्माच्चतुरुपह्वयते
॥ २४ ॥ स वै चतुरुपह्वयमानः । अथ नानेवोपह्वयते
ऽजामितायै जामि ह कुर्य्याद्यदिडोपहूतेडोपहूतेत्त्येवोपह्व-
येतो'पहूतेडेति वेडोपहूते'ति तदर्व्वाची'मुपह्वयत ऽउपहूतेडे'ति
तत्पराची'मुपो' ऽअस्माँ२॥ ऽइडा ह्वयतामि'ति तदात्मानं
चैवैतन्नाऽन्तरेत्त्यन्यथेव च भवतीडोपहूतेति तत्पुनरर्व्वाची-
मुपह्वते तदर्व्वाचीं चैवैनामेतत्पराचीं चोपह्वयते ॥ २५ ॥
'मानवीघृतपदी'ति । मनुर्ह्येतामग्रेऽजनयत तस्मादाह मान-

(१) तै० ब्रा० ३. ५. १३। (२) तै० ब्रा० ३. ५. १३। (३) तै० ब्रा० ३. ५. १३। (४) तै० ब्रा० ३. ५. १३। (५) तै० ब्रा० ३. ५. १३। (६) तै० ब्रा० ३. ५. १३। (७) तै० ब्रा० ३. ५. १३। (८) तै० ब्रा० ३. ५. १३।

वीति घृतपदीति यद्देवाऽस्यै घृतं पद्दे समतिष्ठत तस्मादाह घृतपदीति ॥ २६ ॥ उत मैत्रावरुणीति। यदेव मित्रावरुणाभ्याꣳ समगच्छत स ऽएव मैत्रावरुणो न्यङ्गो 'ब्रह्मा[1] देवकृतोपहूते'ति ब्रह्म ह्येषां* देवकृतोपहूतोपहूता 'दैव्या[2] ऽअद्ध्वर्य्यव ऽउपहूता मनुष्या' ऽइति तद्देवाँश्चैवैतदद्ध्वर्य्यूनुपह्वयते ये च मानुषा वत्सा वै दैव्या ऽअद्ध्वर्य्यवोऽथ य ऽइतरे ते मानुषाः ॥ २७ ॥ य ऽइमं यज्ञमवाऽन्न्ये च यज्ञपतिं वर्द्धानिति। एते वै यज्ञमवन्ति ये ब्राह्मणाः शुश्रुवाꣳसोऽनूचाना ऽएते ह्येनं तन्न्वत ऽएत ऽएनं जनयन्ति तदु तेभ्यो निह्नुते वत्सा ऽउ वै यज्ञपतिं वर्द्धन्ति यस्य ह्येते भूयिष्ठा भवन्ति स हि यज्ञपतिर्व्वर्द्धते तस्मादाह ये च यज्ञपतिं वर्द्धानिति ॥ २८ ॥ 'उपहूते[3] द्यावापृथिवी पूर्व्वजे ऽऋतावरी देवी देवपुत्रे' ऽइति। तदिमे द्यावापृथिवी ऽउपह्वयते ययोरिदꣳ सर्व्वमद्ध्युपहूतोऽयं यजमान ऽइति तद्यजमानमुपह्वयते तद्यदत्र नाम न गृह्णाति परोऽक्षꣳ स्वत्राऽऽशीर्य्यदिडायां मानुषꣳ ह कुर्य्याद्यन्नाम गृह्णीयाद्व्यृद्धं वै तद्यज्ञस्य यन्मानुषं नेद्व्यृद्धं यज्ञे करवाणीति तस्मान्न नाम गृह्णाति॥ २९ ॥ 'उत्तरस्यां[4] देवयज्ज्यायामुपहूत' ऽइति। तदस्मा ऽएतज्जीवातुमेव परोऽक्षमाशास्ते जीवन् हि पूर्व्वमिष्ट्वाऽथाऽपरं यजते ॥ ३० ॥ तदस्मा ऽएतत्प्रजामेव परोऽक्षमाशास्ते। यस्य हि प्रजा

(१) तै० ब्रा० ३. ५. १३। (२) तै० ब्रा० ३. ५. १३। (३) तै० ब्रा० ३. ५. १३। (४) तै० ब्रा० ३. ५. १३।

* 'क' पुस्तके 'ब्रह्माह्येषा देव' इति पाठः।

भवत्यमुं लोकमात्मनैत्यथाऽस्मिँल्लोके प्प्रजा यजते तस्मा-
त्प्रजोत्तरा देवयज्या ॥ ३१ ॥ तदस्मा ऽएतत्पशूनेव परोऽक्ष-
माशास्ते । यस्य हि पशवो भवन्ति स पूर्वमिष्ट्वाऽथाऽपरं
यजते ॥ ३२ ॥ 'भूयसि हविष्करण ऽउपहूत' ऽइति ।
तदस्मा ऽएतज्जीवातुमेव परोऽक्षमाशास्ते जीवन्हि पूर्व-
मिष्ट्वाऽथ भूयो भूय ऽएव हविष्करोति ॥३३॥ तदस्मा ऽए-
तत्प्रजामेव परोऽक्षमाशास्ते । यस्य हि प्प्रजा भवत्येक
ऽआत्मना भवत्यथोत दशधा प्प्रजया हविष्क्रियते तस्मा-
त्प्रजा भूयो हविष्करणम् ॥ ३४ ॥ तदस्मा ऽएतत्पशूनेव
परोऽक्षमाशास्ते । यस्य हि पशवो भवन्ति स पूर्वमिष्ट्वाऽथ
भूयो भूय ऽएव हविष्करोति ॥ ३५ ॥ एषा वा ऽआशीः ।
जीवेयं प्रजा मे स्याच्छ्रियं गच्छेयमिति तद्यत्पशूनाशास्ते
तच्छ्रियमाशास्ते श्रीर्हि पशवस्तदेताभ्यामेव तदाशीभ्याॅं
सर्वमाप्तं तस्माद्वा ऽएते ऽअत्र द्वे ऽआशिषौ क्रियेते ॥ ३६ ॥
'देवा म ऽइदॅं हविर्जुषन्तामिति तस्मिन्नुपहूत' ऽइति
तद्यज्ञस्यैवैतत्समृद्धिमाशास्ते यद्धि देवा हविर्जुषन्ते
तेन हि महज्जयति तस्मादाह जुषन्तामिति ॥ ३७ ॥
तां वै प्राऽश्नन्त्येव । नाऽग्नौ जुह्वति पशवो वा ऽइडा
नेत्पशूनग्नौ प्प्रवृणजामेति तस्मान्नाऽग्नौ जुह्वति ॥ ३८ ॥
प्प्राणेष्वेव हूयते । होतरि त्वद्यजमाने त्वदध्वर्यौ त्वदथ
यत्पूर्वार्द्धं पुरोडाशस्य प्प्रशीर्य पुरस्ताद्ध्रुवायै निदधाति
यजमानो वै ध्रुवा तद्यजमानस्य प्प्राऽशितं भवत्यथ

(१) तै० ब्रा० ३ । ५ । १३ । (२) तै० ब्रा० ३ । ५ । १३ ।

यत्प्रत्यक्षं न प्प्राऽश्नाति नेदसꣳस्थिते यज्ञे प्प्राऽश्नानीत्येतदेवाऽस्य प्प्राऽशितं भवति सर्व्वे प्प्राऽश्नन्ति सर्व्वेषु मे हुताऽसदिति पञ्च प्प्राऽश्नन्ति पशवो वा ऽइडा पाङ्क्ता वै पशवस्तस्मात्पञ्च प्प्राऽश्नन्ति ॥ ३९ ॥ अथ यत्र प्प्रातिपद्यते । तच्चतुर्द्धा* पुरोडाशं कृत्वा बर्हिषदं करोति तदत्र पितॄणां भाजनेन चतस्रो वा ऽअवान्तरदिशो वाऽन्तरदिशो वै पितरस्तस्माच्चतुर्द्धा पुरोडाशं कृत्वा बर्हिषदं करोति ॥ ४० ॥ अथ यत्राऽऽह्वो'पहूते† द्यावापृथिवी' ऽइति । तदग्नीध ऽआदधाति तदग्नीत्प्राश्ना'[1]त्युपहूता पृथिवी मातोप मां पृथिवी माता ह्वयतामग्निराग्नीध्रात्स्वाहोपहूतो द्यौष्पितोप मां द्यौष्पिता ह्वयतामग्निराग्नीध्रात्स्वाहे'ति द्यावापृथिव्यो वा ऽएष यदाग्नीध्रस्तस्मादेवं प्राऽश्नाति ॥४१॥ अथ यत्राऽऽशिषमाशास्ते । तज्जपति '[2]मयीदमिन्द्र ऽइन्द्रियं दधात्वस्मान्रायो मघवानः सचन्ताम् । अस्माकꣳ सन्त्वाशिषः सत्या नः सन्त्वाशिष' ऽइत्याशिषामेवैष प्प्रातिग्रहस्तद्या ऽएवाऽत्रर्त्विजो यजमानायाऽऽशिष ऽआशासते ता ऽएवैतत्प्रतिगृह्याऽऽत्मन्कुरुते ॥४२॥ अथ पवित्रयोम्मार्ज्जयन्ते । पाकयज्ञियेव वा ऽएतदिडयाऽचारिषुः पवित्रपूता यदत ऽऊर्द्ध्वमसꣳस्थितं यज्ञस्य तत्तनवामहा ऽइति तस्मात्पवित्रयोम्मार्ज्जयन्ते ॥ ४३ ॥ अथ ते पवित्रे प्प्रस्तरेऽपि सृजति ।

* भक्षणेऽयं क्रमो बोध्यः—पूर्वं चतुर्धाकरणभागस्य भक्षणम्, ततः षडवत्तभागस्य, तत इडाभागस्येति ।

† का० हौ० परि० ।

(१) शु० सं० अ० २ क० १०–११ । (२) शु० सं० अ० २ क० ११ ।

यजमानो वै प्प्रस्तरः प्प्राणोदानौ पवित्रे यजमाने तत्प्राणोदानौ दधाति तस्मात्ते पवित्रे प्प्रस्तरेऽपिसृजाति ॥४४॥

अष्टमाध्याये प्रथमं ब्राह्मणम् ॥१॥



ते वा ऽएते ऽउल्मुके ऽउदूहन्ति । अनुयाजेभ्यो यातयामेव वा ऽएतदग्निर्भवति देवेभ्यो हि यज्ञमूहिवान्भवत्त्ययातयाम्म्न्यनुयाजाँस्तनवामहा ऽइति तस्माद्वा ऽएते ऽउल्मुके ऽउदूहन्ति ॥ १ ॥ ते पुनरनु सꣳस्पर्शयन्ति। पुनरेवैतदग्निमाप्प्याययन्त्ययातयामानं कुर्वन्त्ययातयाम्नि यदृत ऽऊर्द्ध्वमसꣳस्थितं यज्ञस्य तत्तनवामहा ऽइति तस्मात्पुनरनु सꣳस्पर्शयन्ति ॥ २ ॥ अथ समिधमभ्यादधाति । समिन्ध ऽएवैनमेतत्समिद्धे यदृत ऽऊर्द्ध्वमसꣳस्थितं यज्ञस्य तत्तनवामहा ऽइति तस्मात्समिधमभ्यादधाति ॥ ३ ॥ ताꣳ होताऽनुमन्त्रयते । 'एषा ते ऽअग्ने समित्तया वर्धस्व चाऽऽच प्प्यायस्व वर्द्धिषीमहि च वयमा च प्प्यासिषीमही'ति तद्यथैवाऽदः समिद्ध्यमानायाऽन्वाहैवमेवैतदन्वाह तदेतद्धोतुः कर्म्म स यदि मन्येत न होता वेदेत्यपि स्वयमेव यजमानोऽनुमन्त्रयेत ॥ ४ ॥ अथ सम्मार्ष्टि । युनक्त्येवैनमेतद्युक्तो यदृत ऽऊर्द्ध्वमसꣳस्थितं यज्ञस्य तद्वहादिति तस्मात्सम्मार्ष्टि सकृत्सकृत्सम्मार्ष्टि त्रिस्त्रिर्वा ऽअग्रे देवेभ्यः सम्मृजन्ति नेत्तथा

(१) शु० सं० अ० २ क० १२ ।

करवाम यथा देवेभ्य ऽइति तस्मात्सकृत्सकृत्सम्मार्ष्टयजामितायै जामि ह कुर्य्याद्यत्त्रिः पूर्वं त्रिरपरं तस्मात्सकृत्सकृत्सम्मार्ष्टि ॥ ५ ॥ स सम्मार्ष्टि । 'अग्ने वाजजिद्वाजं त्वा सस्रवाꣳसं वाजजितꣳ सम्मार्ज्मी'ति सरिष्यन्तमिति वा ऽअग्र ऽआह सरिष्यन्निव हि तर्हि भवत्यथाऽत्र सस्रवाꣳसमिति ससृवेव ह्यत्र भवति तस्मादाह सस्रवाꣳसमिति ॥ ६ ॥ अथाऽनुयाजान्यजति । या वा ऽएतेन यज्ञेन देवता ह्वयति याभ्य ऽएष यज्ञस्तायते सर्वा वै तत्ता ऽइष्टा भवन्ति तद्यत्तासु सर्वास्विष्टास्वथैतत्पश्चेवाऽनुयजति तस्मादनुयाजा नाम ॥ ७ ॥ अथ यदनुयाजान्यजति । छन्दाꣳसि वा ऽअनुयाजाः पशवो वै देवानां छन्दाꣳसि तद्यथेदं पशवो युक्ता मनुष्येभ्यो वहन्त्येवं छन्दाꣳसि युक्तानि देवेभ्यो यज्ञं वहन्ति तद्यत्र च्छन्दाꣳसि देवान्त्समतर्प्पयन्नथ च्छन्दाꣳसि देवाः समतर्प्पयँस्तदतस्तत्प्रागभूद्यच्छन्दाꣳसि युक्तानि देवेभ्यो यज्ञमवाक्षुर्य्यद्देवान्त्समतीतृपन् ॥ ८ ॥ अथ यदनुयाजान्यजति । छन्दाꣳसि वा ऽअनुयाजाश्छन्दाꣳस्येवैतत्सन्तर्प्पयति तस्मादनुयाजान्यजति तस्माद्येन वाहनेन धावयेत्तद्विमुच्य ब्रूयात्पाययतैनत्सुहितं कुरुतेत्येष ऽउ वाहनस्याऽपह्नवः ॥ ९ ॥ स वै खलु बर्हिः प्रथमं यजति । तद्वै कनिष्ठं छन्दः सद् गायत्री प्रथमा च्छन्दसां युज्यते तदु तद्वीर्य्येणैव यच्छ्येनो भूत्वा दिवः सोममाहरत्तद्यथाऽयथं मन्यन्ते

(१) शु० सं० अ० २ क० १४ ।

यत्कनिष्ठं छन्दः सद् गायत्री प्रथमा छन्दसां युज्यतेऽथाऽत्र यथायथं देवाश्छन्दाꣳस्यकल्पयन्ननुयाजेषु नेत्पापवस्यसमसदिति ॥ १० ॥ स वै खलु बर्हिः प्रथमं यजति । अयं वै लोको बर्हिरोषधयो बर्हिरस्मिन्नेवैतल्लोक ऽओषधीर्दधाति ता ऽइमा ऽअस्मिँल्लोक ऽओषधयः प्रतिष्ठितास्तादिदꣳ सर्वं जगदस्यां तेनेयं जगती तज्जगतीं प्रथमामकुर्वन् ॥ ११ ॥ अथ नराशꣳसं द्वितीयं यजति । अन्तरिक्षं वै नराशꣳसः प्रजा वै नरस्ता ऽइमा ऽअन्तरिक्षमनु वावद्यमानाः प्रजाश्चरन्ति यद्वै वदति शꣳसतीति वै तदाहुस्तस्मादन्तरिक्षं नराशꣳसोऽन्तरिक्षमु वै त्रिष्टुप् तत्त्रिष्टुभं द्वितीयामकुर्वन् ॥ १२ ॥ अथाऽग्निरुत्तमः । गायत्री वा ऽअग्निस्तद् गायत्रीमुत्तमामकुर्वन्नेवं यथायथेन क्लृप्तेन छन्दाꣳसि प्रत्यतिष्ठꣳस्तस्मादिदमपापवस्यसम् ॥ १३ ॥ 'देवान्यजे'[1]त्येवाऽध्वर्युराह । 'देवन्देवमि'[2]ति सर्वेषु होता देवानां वै देवाः सन्ति छन्दाꣳस्येव पशवो ह्येषां गृहा हि पशवः प्रतिष्ठो हि गृहाश्छन्दाꣳसि वा ऽअनुयाजास्तस्माद्देवान्यजेत्येवाऽध्वर्युराह देवन्देवमिति सर्वेषु होता ॥ १४ ॥ 'वसुवने वसुधेयस्ये'[3]ति । देवताया ऽएव वषट् क्रियते देवतायै हूयते न वा ऽअत्र देवताऽस्त्यनुयाजेषु 'देवं बर्हि'[4]रिति तत्र नाऽग्निर्नेन्द्रो न सोमो 'देवो नराशꣳस' [5]ऽइति नाऽत ऽएकं चन यो वा ऽअत्राऽग्निर्गायत्री स* निदानेन ॥ १५ ॥ अथ

(१) का० श्रौ० सू० ३. ५. ६। (२) का० श्रौ० सू० ३. ५ ८। (३) तै० ब्रा० ३. ५. ९। (४) तै० ब्रा० ३. ५. ९। (५) तै० ब्रा० ३. ५. ९।

* 'क' पुस्तके 'सा निदानेन' इति समुपलभ्यते।

'यद्वसुवने व्वसुधेयस्ये'ति यजति । अग्निर्व्वै व्वसुवनिरिन्द्रो व्वसुधेयोऽस्ति वै च्छन्दसां देवतेन्द्राऽग्नी ऽएवैवमु हैतद्देवता-या ऽएव व्वषट् क्रियते देवतायै हूयते ॥ १६ ॥ अथोत्तममनुयाजमिष्ट्वा समानीय जुहोति । प्प्रयाजाऽनुयाजा व्वा ऽएते तद्यथैवाऽदः प्प्रयाजेषु यजमानाय द्विषन्तं भ्रातृव्व्यं बलिꣳ हारयत्यत्र ऽआद्यं बलिꣳ हारयत्येवमेवैतदनुयाजेषु बलिꣳ हारयति ॥ १७॥ ॥

अष्टमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

माध्यन्दिनीये शतपथब्राह्मणे षष्ठः प्रपाठकः ॥ ६ ॥

कण्डिकासङ्ख्या ॥ १११ ॥



स वै स्रुचौ[*] [†]व्व्यूहति । '[2]अग्नीषोमयोरुज्जितिमनूज्जेषं व्वाजस्य मा प्प्रसवेन प्प्रोहामी'ति जुहूं प्राचीं दक्षिणेन पाणिना'[3]ऽग्नीषोमौ तमपनुदतां योऽस्मान्द्वेष्टि यं च व्वयं द्विष्मो व्वाजस्यैनं प्रसवेनाऽपोहामी'त्युपभृतं प्रतीचीꣳ सव्व्येन पाणिना यदि स्वयं यजमानः ॥ १ ॥ यद्यु ऽअद्ध्वर्य्युः । '[4]अग्नीषोमयोरुज्जितिमनूज्जयत्त्वयं यजमानो व्वाजस्यैनं प्रसवेन प्प्रोहाम्म्यग्नीषोमौ तमपनुदतां यमयं यजमानो द्वेष्टि यश्चैनं द्वेष्टि व्वाजस्यैनं प्रसवेनाऽपोहामी'ति पौर्णमास्यामग्नीषोमीयꣳ हि पौर्णमासꣳ हविर्भवति ॥ २ ॥

---

(१) तै० ब्रा० ३. ५. ९। (२) शु० सं० अ० २ क० १५। (३) शु० सं० अ० २ क० १५। (४) का० श्रौ० सू० ३. ५. १९।

* पलाशकाष्ठनिर्मिता बाहुप्रमाणा हंसमुखप्रणालिका 'स्रुक्' इत्युच्यते। तस्या अपरपर्यायो 'जुहूः' इति।

† परस्परविपरीतत्वेनाऽपनोदनम् 'व्यूहनम्' इत्युच्यते।

अथाऽमावास्यायाम् । 'इन्द्राग्न्योरुज्जितिमनूज्जेषं व्वाजस्य मा प्प्रसवेन प्प्रोहामीन्द्राग्नी तमपनुदतां योऽस्मान्द्वेष्टि यं च वयं द्विष्मो व्वाजस्यैनं प्रसवेनाऽपोहामी'ति यदि स्वयं यजमानः ॥ ३ ॥ यद्यु ऽअद्ध्वर्य्युः । इन्द्राग्न्योरुज्जितिमनूज्जयत्त्वयं यजमानो व्वाजस्यैनं प्रसवेन प्प्रोहामीन्द्राग्नी तमपनुदतां यमयं यजमानो द्वेष्टि यश्चैनं द्वेष्टि व्वाजस्यैनं प्रसवेनापोहामीत्त्यमावास्यायामैन्द्राग्नꣳ ह्यामावास्यꣳ हविर्भवत्त्येवं यथा देवतं व्व्यूहति तद्यदेवं व्व्यूहति ॥ ४ ॥ यजमान ऽएव जुहूमनु । योऽस्मा ऽअरातीयति स ऽउपभृ*तमनु प्प्राञ्चमेवैतद्यजमानमुदूहत्त्यपाञ्चं तमपोहति योऽस्मा ऽअरातीयत्त्यत्त्रैव जुहूमन्न्वाद्य ऽउपभृतमनु प्प्राञ्चमेवैतदत्तारमुदूहत्त्यपाञ्चमाद्यमपोहति ॥ ५ ॥ तद्वा ऽएतत् । समान ऽएव कर्म्मन्व्व्याक्रियते तस्मादु समानादेव पुरुषादत्ता चाऽऽद्यश्च जायेते ऽइदꣳ हि चतुर्थे पुरुषे तृतीये सङ्गच्छामह ऽइति विदेवं दीव्व्यमाना जात्या ऽआसत ऽएतस्मादु तत् ॥ ६ ॥ अथ जुह्वा परिधीन्त्समनक्ति । यया देवेभ्योऽहौषीद्यया यज्ञꣳ समतिष्ठिपत्तयैवैतत्परिधीन्न्प्रीणाति तस्माज्जुह्वा परिधीन्त्समनक्ति ॥ ७ ॥ स समनक्ति । '[2]व्वसुभ्यस्त्वा रुद्रेभ्यस्त्वाऽऽदित्त्येभ्यस्त्वे'त्त्येते वै त्रया देवा यद्वसवो रुद्रा ऽआदित्त्या ऽएतेभ्यस्त्वेत्त्येवैतदाह ॥ ८ ॥

---

( १ ) शु० सं० अ० २ क० १५ । ( २ ) शु० सं० अ० २ क० १६ ।

* अश्वत्थकाष्ठनिर्मिता जुहूसदृशी उपसमीपे भ्रियते ध्रियते इति व्युत्पत्त्या अध्वर्युणा होमार्थं धृतदक्षकरसम्बन्धिजुह्वन्तिके धारणादुपभृदित्युच्यते ।

अथ परिधिमभिपद्याऽऽश्रावयति । परिधिभ्यो ह्येतदाश्रावयति यज्ञो वा ऽआश्रावणं यज्ञेनैवैतत्प्रत्यक्षं परिधीन्प्रीणाति तस्मात्परिधिमभिपद्याऽऽश्रावयति ॥ ९ ॥ स ऽआश्राव्याऽऽह । 'इषिता[1] दैव्या होतार' ऽइति दैव्या वा ऽएते होतारो यत्परिधयोऽग्नयो हीष्टा दैव्या होतार ऽइत्येवैतदाह यदाहेषिता दैव्या होतार ऽइति 'भद्रवाच्च्याये'[2]ति स्वयं वा ऽएतस्मै देवा युक्ता भवन्ति यत्साधु वदेयुर्यत्साधु कुर्युस्तस्मादाह भद्रवाच्च्यायेति 'प्प्रेषितो[3] मानुषः सूक्तवाकाये'ति तदिमं मानुषं होतारं सूक्तवाकाय प्प्रसौति ॥ १० ॥ अथ प्प्रस्तरमादत्ते । यजमानो वै प्प्रस्तरस्तद्यत्राऽस्य यज्ञोऽगँस्तदेवैतद्यजमानं स्वर्गाकरोति देवलोकं वा ऽअस्य यज्ञोऽगन्देवलोकमेवैतद्यजमानमपि नयति ॥ ११ ॥ स यदि व्वृष्टिकामः स्यात् । एतेनैवाऽऽददीत 'सञ्जानाथां[4] द्यावापृथिवी'ऽइति यदा वै द्यावापृथिवी सञ्जानाते* ऽअथ व्वर्षति तस्मादाह सञ्जानाथां द्यावापृथिवी ऽइति 'मित्रा[5]वरुणौ त्वा व्वृष्ट्याऽवतामि'ति तद्यो व्वर्षस्येष्टे स त्वा व्वृष्ट्याऽवत्वित्येवैतदाहाऽयं वै व्वर्षस्येष्टे योऽयं पवते सोऽयमेक ऽइवैव पवते सोऽयं पुरुषेऽन्तः प्प्रविष्टः प्प्राङ् च प्प्रत्यङ् च ताविमौ प्प्राणोदानौ प्प्राणोदानौ वै मित्रावरुणौ तद्य ऽएव व्वर्षस्येष्टे स त्वा व्वृष्ट्याऽवत्वित्येवैतदाह तमेते-

(१) का० श्रौ० सू० ३, ६, १। (२) का० श्रौ० सू० ३, ६, २। (३) का० श्रौ० सू० ३, ६, १। (४) शु० सं० अ० २ क० १६। (५) शु० सं० अ० २ क० १६।

* 'ग' पुस्तके 'सजानाथे' इति।

नैवाऽऽददीत यदा ह्येव कदा च व्वृष्टिः शमिव* तमनक्त्याहुतिमेवैतत्करोत्याहुतिर्भूत्वा देवलोकं गच्छादिति ॥ १२ ॥ स वा ऽअग्रं जुह्वामनक्ति। मद्ध्यमुपभृति मूलं ध्रुवायामग्रमिव हि जुहूर्मद्ध्यमिवोपभृन्मूलमिव ध्रुवा† ॥१३॥ सोऽनक्ति। '(१)व्यन्तु व्वयोऽक्तᳪ रिहाणा' ऽइति व्वय ऽएवैनमेतद्भूतमस्मान्मनुष्यलोकाद्देवलोकमभ्युत्पातयति तन्नीचैरिव हरति द्वयं तद्यस्मान्नीचैरिव हरेद्यजमानो वै प्प्रस्तरोऽस्या ऽएवैनमेतत्प्रतिष्ठायै नोद्धन्तीहो ऽएव व्वृष्टिं नियच्छति ॥ १४ ॥ स हरति '(२)मरुतां पृषतीर्गच्छे'ति देवलोकं गच्छेत्त्येवैतदाह यदाह मरुतां पृषतीर्गच्छेति '(३)व्वशा पृश्निर्भूत्त्वा दिवं गच्छ ततो नो व्वृष्टिमावहे'तीयं वै व्वशा पृश्निर्यदिदमस्यां मूलि चाऽमूलं चाऽन्नाद्यं प्रतिष्ठितं तेनेयं व्वशा पृश्निरियं भूत्त्वा दिवं गच्छेत्त्येवैतदाह ततो नो व्वृष्टिमावहेति व्वृष्टाद्वा ऽऊर्ग्रसः सुभूतं जायते तस्मादाह ततो नो व्वृष्टिमावहेति ॥ १५ ॥ अथैकं तृणमपगृह्णाति। यजमानो वै प्प्रस्तरः स यत्कृत्स्नं प्रस्तरमनुप्प्रहरेत् क्षिप्रे ह यजमानोऽमुं लोकमियात्तथो ह यजमानो ज्ज्योग्जीवति यावद्धेवाऽस्येह मानुषमायुस्तस्मा ऽएवैतदुपगृह्णाति ॥ १६ ॥ तन्मुहूर्त्तं धारयित्त्वाऽनुप्प्रहरति।

---

* 'ख' पुस्तके 'समिव' इति।

† विकङ्कतकाष्ठनिर्मिता जुहूसदृशी यागसमाप्तिं यावत् विद्यमानतया स्थिरत्वदर्शनात् ध्रुवति गमनरहिता भवतीति ध्रुवा।

(१) शु० सं० अ० २ क० १६। (२) शु० सं० अ० २ क० १६। (३) शु० सं० अ० २ क० १६।

तद्यत्रा ऽस्येतर ऽआत्मा ऽगँस्तद्देवा ऽस्यैतद्द्गमयत्त्यथ यन्ना-
ऽनुप्प्रहरेदन्तरियाद्ध यजमानं लोकात्तथो ह यजमानं
लोकान्नाऽन्तरेति ॥ १७ ॥ तं प्राञ्चमनुसमस्यति । प्प्राची
हि देवानां दिगथो ऽउदञ्चमुदीची हि मनुष्याणां दिक्त-
मङ्गुलिभिरेव *योयुप्प्येरन्न काष्ठैर्द्दारुभिर्वा ऽइतरद्ध शवं
व्वृषन्ति नेत्तथा करवाम यथेतरद्ध शवमिति तस्मादङ्गु-
लिभिरेव योयुप्प्येरन्न काष्ठैर्य्यदा होता †सूक्तवाकमाह
॥ १८ ॥ अथाऽग्नीदाहाऽनुप्प्रहरेति । तद्यत्राऽस्येतर
ऽआत्माऽगँस्तद्देवाऽस्यैतद्द्गमयेत्त्येवैतदाह तूष्णीमेवाऽनुप्प्र-
हृत्य '[1]चक्षुष्पा ऽअग्नेऽसि चक्षुर्म्मे पाही'त्त्यात्मानमुपस्पृ-
शति तेनो ऽअप्प्यात्मानं नाऽनुप्प्रव्वृणक्ति ॥ १९ ॥ अथाऽऽह
'[2]संव्वदस्वे'ति । संव्वादयैनं देवैरित्त्येवैतदाहा'[3]ऽगानग्नीदि'त्त्यगन्
खल्वित्त्येवैतदाहाऽगन्नितीतरद्ध प्प्रत्त्याह '[4]श्रावये'ति तं वै देवैद्ध
श्रावय तमनुबोधयेत्त्येवैतदाह '[5]श्रौषडि'ति विदुर्व्वा ऽएनमनु
वा ऽएनमभुत्सतेत्त्येवैतदाहैवमद्ध्वर्युश्चाऽग्नीच्च देवलोकं
यजमानमपि नयतद्ध ॥२०॥ अथा ऽऽह '[6]स्वगा दैव्व्या होतृभ्य'
ऽइति । दैव्व्या वा ऽएते होतारो यत्परिधयोऽग्नयो हि
तानेवैतत्त्स्वगाकरोति तस्मादाह स्वगा दैव्व्या होतृभ्य
ऽइति 'स्वँस्तिर्म्मानुषेभ्य' ऽइति तदस्मै मानुषाय होत्रे-

---

* 'युप रुप लुप विमोहने' दिवा० प० (१२९–१३१) 'योयुप्येरन्' अतिशयेन तं मूर्छयेयुरित्यर्थः।

† 'इदं द्यावापृथिवी भद्रमभूत्' इत्यनुवाकप्रतिपाद्यो मन्त्रविशेषः सूक्तवाकः, का० हौ० परि० (१. १३) इति।

(१) शु० सं० अ० २ क० १६। (२) का० श्रौ० सू० ३, ६, १५। (३) का० श्रौ० सू० ३, ६, १५। (४) का० श्रौ० सू० ३, ६, १५। (५) का० श्रौ० सू० ३, ६, १५। (६–७) का० श्रौ० सू० ३, ६, १५।

ामाशास्ते ॥ २१ ॥ अथ परिधीन्*नुप्रहरति । स
यममेवाऽग्रे परिधिमनुप्रहरति 'यं[1] परिधिं पर्यधत्था
े देव पणिभिर्गुह्यमानः । तन्त ऽएतमनु जोषं भराम्येष
ाद्पचेतयाता' ऽइत्य'ग्नेः[2] प्रियं पाथोऽपीत'मितीतराव-
मस्यति ॥ २२ ॥ अथ जुहूं चोपभृतं च सम्प्रगृह्णाति ।
ा हैवाऽऽहुतिं करोति यदनक्त्याहुतिर्भूत्वा देवलोकं
ाादिति तस्माज्जुहूं चोपभृतं च सम्प्रगृह्णाति ॥ २३ ॥
े विश्वेभ्यो देवेभ्यः सम्प्रगृह्णाति । यद्वा ऽअनादिष्टं
ातायै हविर्गृह्यते सर्वा वै तस्मिन्देवता अपित्विन्यो
यन्ते न वा ऽएतत्कस्यै चन देवतायै हविर्गृह्णन्नादिशति
ाज्यं तस्माद्विश्वेभ्यो देवेभ्यः सम्प्रगृह्णात्येतदु वैश्वदेवः
ार्यज्ञे ॥ २४ ॥ स सम्प्रगृह्णाति । 'सं[3]स्रवभागा
षा बृहन्त' ऽइति संस्रवो ह्येव खलु परिशिष्टो
ाति 'प्रस्तरे[4]ष्ठाः परिधेयाश्च देवा' ऽइति प्रस्तरश्च
परिधयश्चाऽनुप्रहृता भवन्ती'मां[5] वाचमभि विश्वे
ान्त' ऽइत्येतदु वैश्वदेवं करो'त्यासद्याऽस्मिन्बर्हिषि माद-
ं स्वाहा वाडि'ति तद्यथा वषट्कृतः हुतमेवमस्यैतद्भवति
२५ ॥ स यस्याऽनसो हविर्गृह्णन्ति । अनसस्तस्य
े विमुञ्चन्ति यतो युनजाम ततो विमुञ्चामेति यतो
ा युञ्जन्ति ततो विमुञ्चन्ति यस्यो पात्र्यै स्फ्ये तस्य

---

* बाहुमात्र्यः पलाशादिसमिध आहवनीयस्य परितो निधानात् 'परिधयः'* इत्युच्यन्ते ।

(१) शु० सं० अ० २ क० १७ । (२) शु० सं० अ० २ क० १७ । (३) शु०
ं० अ० २ क० १८ । (४) शु० सं० अ० २ क० १८ । (५) शु० सं० अ० २ क० १८ ।
६ ) शु० सं० अ० २ क० १८ ।

यतो युनजाम ततो विमुञ्चामेति यतो ह्येवं युञ्जन्ति ततो विमुञ्चन्ति ॥ २६ ॥ युजौ ह वा ऽएते यज्ञस्य यत्स्रुचौ । ते ऽएतद्युङ्क्ते यत्प्रचरति स यं निधाया-ऽवद्येद्यथा वाहनमवाच्छिन्द्यादेवं तत्ते ऽएतत्स्विष्टकृति विमोचन-मागच्छतस्ते तत्सादयति तद्विमुञ्चति ते ऽएतत्पुनः प्रयुङ्क्तेऽनुयाजेषु सोऽनुयाजैश्चरित्त्वैतद्विमोचनमागच्छति ते तत्सादयति तद्विमुञ्चति ते ऽएतत्पुनः प्रयुङ्क्ते यत्स-म्प्रगृह्णाति तद्यां गतिमभियुङ्क्ते तां गतिं गत्वा विमुञ्चते यज्ञं वा ऽअनुप्रजास्तस्मादयं पुरुषो युङ्क्तेऽथ विमु-ञ्चतेऽथ युङ्क्ते तद्यां गतिमभियुङ्क्ते तां गतिं गत्वाऽन्ततो विमुञ्चते स सादयति 'घृताची[1] स्थो धुर्यौ पातः सुम्ने स्थः सुम्ने मा धत्तमि'ति साध्व्यौ स्थः साधौ मा धत्तमित्ये-वैतदाह ॥ २७ ॥

अष्टमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

इत्यष्टमोऽध्यायः ॥ ८ ॥



स यत्राऽऽह । 'इषिता[2] दैव्या होतारो भद्रवाच्याय-प्रेषितो मानुषः सूक्तवाकाये'ति यदतो होताऽन्वाह सूक्तैव* तदाह यजमानायैवैतदाशिषमाशास्ते तद्वा ऽएतदुपरिष्टाद्यज्ञस्याऽऽशिषमाशास्ते द्वयं तद्यस्मादुपरिष्टा-

(१) शु० सं० अ० २ क० १९ । (२) का० श्रौ० सू० ३. ६. २ ।

* 'ग-च' पुस्तके ''सूक्त ऽइव' इति पाठः ।

यज्ञस्याऽऽशिषमाशास्ते ॥ १ ॥ यज्ञं वा ऽएष जनयति । यो यजत ऽएतेन ह्युक्ता ऽऋत्विजस्तन्न्वते तं जनयन्त्यथाऽऽशिषमाशास्ते तामस्मै यज्ञ ऽआशिषꣳ सन्नमयति यामाशिषमाशास्ते यो माऽजीजनतेति तस्माद्वा ऽउपरिष्टाद्यज्ञस्याऽऽशिषमाशास्ते ॥ २ ॥ देवान्न्वा ऽएष प्प्रीणाति । यो यजत ऽएतेन यज्ञेनर्ग्भिरिव त्वद्यजुर्भिरिव त्वदाहुतिभिरिव त्वत्स देवान्प्प्रीत्त्वा तेष्वपित्त्वी भवति तेष्वपित्त्वी भूत्त्वाऽथाऽऽशिषमाशास्ते तामस्मै देवा ऽआशिषꣳ सन्नमयन्ति यामाशिषमाशास्ते यो नोऽप्प्रैषीदिति तस्माद्वा ऽउपरिष्टाद् यज्ञस्याऽऽशिषमाशास्ते ॥ ३॥ अथ प्प्रतिपद्यते । 'इदं[1] द्यावापृथिवी भद्द्रमभूदि'ति भद्रꣳ ह्यभूद्यो यज्ञस्य सꣳस्थामग'न्नार्ध्म[2] सूक्तवाकमुत नमोवाकमि'त्युभयं वा ऽएतद्यज्ञ ऽएव यत्सूक्तवाकश्च नमोवाकश्चाऽरात्स्म यज्ञमविदाम यज्ञमित्येवैतदाहा'ऽग्ने[3] त्वꣳ सूक्तवागस्युपश्रुती दिवस्पृथिव्व्योरि'त्यग्निमेवैतदाह त्वꣳ सूक्तवागस्युपशृण्वत्योरनयोर्द्यावापृथिव्व्योरित्योमन्वती तेऽस्मिन्यज्ञे यजमान द्यावापृथिवी स्तामित्यन्नवत्यौ तेऽस्मिन्यज्ञे यजमान द्यावापृथिवी स्तामित्येवैतदाह ॥ ४ ॥ 'शङ्गवी[4] जीवदानू*'ऽइति । शङ्गवी ते जीवदानू स्तामित्येवैतदा'हाऽत्रस्नूऽअप्प्रवेदे' ऽइति माऽऽह कस्माच्चन प्रत्राऽऽसीर्म्मो त ऽइदं

(१) तै० ब्रा० ३, ५, १०। (२) तै० ब्रा० ३, ५, १०। (३) तै० ब्रा० ३. ५. १०। (४) तै० ब्रा० ३. ५. १०।

* 'जीवदानू' 'जीरदानू' शब्दौ अभिन्नार्थकौ, शाखाभेदात् भिन्नरूपौ श्रूयेते ॥

पुष्टं कश्चन प्राविदतेत्त्येवैतदाह ॥५॥ 'उरुगव्यूती ऽअभयङ्कृतावि'ति । उरुगव्यूती तेऽभये स्तामित्त्येवैतदाह'व्वृष्टिद्यावा *रीत्यापे'ति व्वृष्टिमत्त्यौ ते स्तामित्त्येवैतदाह ॥ ६ ॥ 'शम्भुवौ मयोभुवा'विति । शम्भुवौ ते मयोभुवौ स्तामित्त्येवैतदाहो'र्ज्जस्वती च पयस्वती चे'ति रसवत्त्यौ त ऽउपजीवनीये स्तामित्त्येवैतदाह ॥ ७ ॥ 'सूपचरणा च स्वधिचरणा' चेति । सूपचरणाह तेऽसावस्तु यामधस्तादुपचरसि स्वधिचरणो त ऽइयमस्तु यामुपरिष्टादधिचरसीत्त्येवैतदाह 'तयोराविदी'ति तयोरनुमन्त्र्यमानयोरित्त्येवैतदाह ॥ ८ ॥ 'अग्निरिदꣳ हविः । अजुषताऽवीवृधत महो ज्यायोऽकृते'ति तदाग्नेयमाज्यभागमाह 'सोम ऽइदꣳ हविरजुषताऽवीवृधत महो ज्यायोऽकृते'ति तत्सौम्म्यमाज्यभागमाहा'ऽग्निरिदꣳ हविरजुषताऽवीवृधत महो ज्यायोऽकृते'ति तद्य ऽएष ऽउभयत्राऽच्युत ऽआग्नेयः पुरोडाशो भवति तमाह ॥ ९ ॥ अथ यथादेवतम् । 'देवा ऽआज्यपा ऽआज्यमजुषन्ताऽवीवृधन्त महो ज्यायोऽकते'ति तत्प्रयाजाऽनुयाजानाह प्रयाजाऽनुयाजा वै देवा ऽआज्यपा 'ऽअग्निर्होत्त्रेणेदꣳ हविरजुषताऽवीवृधत महो ज्यायोऽकृते'ति तदग्निꣳ होत्रे-

---

* रीतिस्तृप्तिस्तामापत इति'रीत्यापा' सुष्ठु वर्षत्याविल्यर्थः ।

(१) तै० ब्रा० ३. ५. १० । (२) तै० ब्रा० ३. ५. १० । (३) तै० ब्रा० ३. ५. १० । (४) तै० ब्रा० ३. ५. १० । (५) तै० ब्रा० ३. ५. १० । (६) तै० ब्रा० ३. ५. १० । (७) तै० ब्रा० ३. ५. १० । (८) तै० ब्रा० ३. ५. १० । (९) तै० ब्रा० ३. ५. १० । (१०) तै० ब्रा० ३. ५. १० । (११) तै० ब्रा० ३. ५. १० ।

णाऽऽहा॑ऽजुषतेत्त्येवं या ऽइष्टा देवता भवन्ति ताः सम्पश्यत्यसौ हविरजुषताऽसौ हविरजुषतेति तद्यज्ञस्यैवैतत्समृद्धिमाशास्ते यद्धि देवा हविर्जुषन्ते तेन हि महज्जयति तस्मादाहाऽजुषतेत्त्यऽवीवृधतेति यद्वै देवा[†] हविर्जोषयन्ते तदपि गिरिमात्रं कुर्वते तस्मादाहाऽवीवृधतेति ॥ १० ॥ '[1]महो ज्यायोऽक्रते'ति । यज्ञो वै देवानां महस्तꣳ ह्येतज्ज्यायाꣳसमिव कुर्वते तस्मादाह महो ज्यायोऽक्रतेति ॥ ११ ॥ '[2]अस्यामृधेद्धोत्रायां देवङ्गमायामि'ति । अस्याꣳ राद्ध्नोतु होत्रायां देवङ्गमायामित्त्येवैतदाहाऽऽशास्तेऽयं यजमानोऽसाविति नाम गृह्णाति तदेनं प्रत्त्यक्षमाशिषा सम्पादयति ॥ १२ ॥ '[3]दीर्घायुत्त्वमाशास्त' ऽइति । सा याऽमुत्रोत्तरा देवयज्या तद्धिह प्प्रत्त्यक्षं दीर्घायुत्वꣳ ॥ १३ ॥ '[4]सुप्प्रजास्त्वमाशास्त' ऽइति । तद्यदमुत्र भूयो हविष्करणं तदिह प्प्रत्त्यक्षꣳ सुप्प्रजास्त्वं प्रशासनꣳ स कुर्य्याद्य ऽएवं कुर्य्यादुत्तरां देवयज्यामाशास्त ऽइति त्त्वेव ब्रूयात्तदेव जीवातुं तत्प्रजां तत्पशून् ॥ १४ ॥ '[5]भूयो हविष्करणमाशास्त'ऽइति । तद्वेव तत् '[6]सजातवनस्यामाशास्त' ऽइति प्प्राणा वै सजाताः प्प्राणैर्हि जायते तत्प्राणानाशास्ते ॥ १५ ॥ '[7]दिव्यं धामाऽऽशास्त'ऽइति । देवलोके मेऽप्प्यसदिति वै यजते यो यजते तद्देवलोक ऽएवैनमेतदपित्त्विनं करोति '[8]यदनेर्न

* 'णाऽजुषत' इति 'ख' 'च' पुस्तके पाठः ।

† 'ख च' पुस्तके 'हविर्जुषन्ते' इति पाठः ।

(१) तै० ब्रा० ३. ५. १० । (२) तै० ब्रा० ३. ५. १० । (३) तै० ब्रा० ३. ५. १० । (४) तै० ब्रा० ३. ५. १० । (५) तै० ब्रा० ३. ५. १० । (६) तै० ब्रा० ३. ५. १० । (७) तै० ब्रा० ३. ५. १० । (८) तै० ब्रा० ३. ५. १० ।

हविषाऽऽशास्ते तदश्यात्तदृध्यादि' ति यदनेन हविषाऽऽशास्ते तदस्मै सर्व्वꣳ समृध्यतामित्येवैतदाह ॥१६॥ ता वा ऽएताः । पञ्चाऽऽशिषः करोति तिस्र ऽइडायां ता ऽअष्टावष्टाऽक्षरा वै गायत्री वीर्य्यं गायत्री वीर्य्यमेवैतदाशिषोऽभिसम्पादयति ॥ १७ ॥ नाऽतो भूयसीः कुर्य्यात् । अतिरिक्तꣳ ह कुर्य्याद्यदतो भूयसीः कुर्य्याद्यद्वै यज्ञस्याऽतिरिक्तं द्विषन्तꣳ हाऽस्य तद् भ्रातृव्यमभ्यतिरिच्यते तस्मान्नाऽतो भूयसीः कुर्य्यात् ॥ १८ ॥ अपीद्धै कनीयसीः सप्त । 'तदस्मै देवा रासन्तामि'ति तदस्मै देवा ऽअनुमन्यन्तामित्येवैतदाह 'तदग्निर्द्देवो देवेभ्यो वनुतां वयमग्नेः परि मानुषा' ऽइति तदग्निर्द्देवो देवेभ्यो वनुतां वयमग्नेरध्यस्मा ऽएतद्वनवामहाऽइत्येवैतदाह ॥ १९ ॥ 'इष्टं च वित्तं चे'ति । ऐषिषुरिव वा ऽएतद्यज्ञं तमविदँस्तस्मादाहेष्टं च वित्तं चे'त्युभे चैनं द्यावापृथिवी ऽअꣳहसस्पाता'मित्युभे चैनं द्यावापृथिवी ऽआर्त्तेर्गोपायतामित्येवैतदाह ॥२०॥ तदु हैक ऽआहुः । उभे च मेति तथा होताऽऽशिष ऽआत्मानं नाऽन्तरेतीति तदु तथा न ब्रूयाद्यजमानस्य वै यज्ञ ऽआशीः किन्नु तत्रर्त्विजां यां वै काञ्च यज्ञ ऽऋत्विज ऽआशिषमाशासते यजमानस्यैव सा न ह स ऽएतां क्व चनाऽऽशिषं प्रतिष्ठापयति य ऽआहोभे च मेति तस्मादु ब्रूयादुभे चैनमित्येव ॥ २१ ॥ 'इह गतिर्व्वामस्ये'ति । तद्यदेव यज्ञस्य साधु तदेवाऽस्मिन्ने-

(१) तै० ब्रा० ३. ५. १०। (२) तै० ब्रा० ३. ५. १०। (३) तै० ब्रा० ३. ५. १०। (४) तै० ब्रा० ३. ५. १०।

तद्दधाति तस्मादाहेह गतिर्वामस्येति ॥ २२ ॥ 'इदं च नमो देवेभ्य' इति । तद्यज्ञस्यैवैतत्सꣳस्थां गत्वा नमो देवेभ्यः करोति तस्मादाहेदं च नमो देवेभ्य इति ॥ २३ ॥ अथ शंय्वोराह । शंयुर्ह वै बार्हस्पत्योऽञ्जसा यज्ञस्य सꣳस्थां विदाञ्चकार स देवलोकमपीयाय तत्तदन्तर्हितमिव मनुष्येभ्य आस ॥२४॥ तद्वा ऋषीणामनुश्रुतमास । शंयुर्ह वै बार्हस्पत्योऽञ्जसा यज्ञस्य सꣳस्थां विदाञ्चकार स देवलोकमपीयायेति ते तामेव यज्ञस्य सꣳस्थामुपायन्याꣳ शंयुर्बार्हस्पत्योऽवेद्यच्छंय्वोरब्रुवꣳस्तामेवैष एतद्यज्ञस्य सꣳस्थामुपैति याꣳ शंयुर्बार्हस्पत्योऽवेद्यच्छंय्वोराह तस्माद्वै शंय्वोराह ॥ २५ ॥ स प्रतिपद्यते । '[२]तच्छंय्वोरावृणीमह' इति तां यज्ञस्य सꣳस्थामावृणीमहे याꣳ शंयुर्बार्हस्पत्योऽवेदित्येवैतदाह ॥ २६ ॥ 'गातुं यज्ञाय[३] गातुं यज्ञपतय' इति । गातुꣳ ह्येष यज्ञायेच्छति गातुं यज्ञपतये यो यज्ञस्य सꣳस्थान्दैवी स्वस्तिरस्तु नः स्वस्तिर्मानुषेभ्य' इति स्वस्ति नो देवत्राऽस्तु स्वस्ति मनुष्यत्रेत्येवैतदा'होर्ध्वं जिगातु भेषजमि'त्यूर्ध्वं* नोऽयं यज्ञो देवलोकं जयत्वित्येवैतदाह ॥ २७ ॥ 'शं[६] नो अस्तु द्विपदे शञ्चतुष्पद' इति । एतावद्वा इदꣳ सर्वं यावद् द्विपाच्चैव चतुष्पाच्च तस्मा एवैतद्यज्ञस्य सꣳस्थां गत्वा शङ्करोति

( १ ) तै० ब्रा० ३. ५. १० । ( २ ) तै० ब्रा० ३. ५. ११ । ( ३ ) तै० ब्रा० ३. ५. ११ । ( ४ ) तै० ब्रा० ३. ५. ११ । ( ५ ) तै० ब्रा० ३. ५. ११ । ( ६ ) तै० ब्रा० ३. ५. ११ ।

* 'क' पुस्तके 'त्यूर्द्ध्वो नोऽयम्' इति लभ्यते ।

तस्मादाह शन्नो ऽअस्तु द्विपदे शञ्चतुष्पद ऽइति ॥ २८ ॥ अथाऽनयेत्त्युपस्पृशति । अमानुष ऽइव वा ऽएतद्भवति यदार्त्त्विज्ज्ये प्प्रवृत्त ऽइयं वै पृथिवी प्प्रतिष्ठा तदस्यामेवैतत्त्प्रतिष्ट्ठायां प्रतितिष्ट्ठति तदु खलु पुनर्म्मानुषो भवति तस्मादनयेत्त्युपस्पृशति ॥ २९ ॥

नवमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



ते वै पत्नीः संयाजयिष्यन्तः प्प्रतिपरायन्ति । जुहूं च स्त्रुवं चाऽद्ध्वर्युरादत्ते वेदः होताऽऽज्यविलापनीमग्नीत् ॥१॥ तद्धैकेषामद्ध्वर्युः । पूर्व्वेणाऽऽहवनीयं पर्य्येति तदु तथा न कुर्य्याद्बहिर्द्धा ह यज्ञात्स्याद्यत्तेनेयात् ॥ २ ॥ जघनेनो हैव पत्नीम् । एकेषामद्ध्वर्युरेति नो ऽएव तथा कुर्य्यात्पूर्व्वार्द्धो वै यज्ञस्याऽद्ध्वर्युर्ज्जघनार्द्धः पत्नी यथा भसत्तः शिरः प्प्रतिदद्ध्यादेवं तद्बहिर्द्धा हैव यज्ञात्स्याद्यत्तेनेयात् ॥ ३ ॥ अन्तरेणो हैव पत्नीम् । एकेषामद्ध्वर्युरेति नो ऽएव तथा कुर्य्यादन्तरियाद्ध यज्ञात्पत्नीं यत्तेनेयात्तस्मादु पूर्व्वेणैव गार्हपत्यमन्तरेणाऽऽहवनीयं चैति तथा ह न बहिर्द्धा यज्ञाद्भवति यथो ऽएवाऽदः प्प्रचरन्नन्तरेण सञ्चरति स ऽउ ऽएवाऽस्यैष सञ्चरो भवति ॥४॥ अथ पत्नीः* संय्याजयन्ति । यज्ञाद्वै

* दर्शपूर्णमासशेषभूताः पत्नीदेवताकाश्चत्वारो यागाः 'पत्नीसंयाजाः' । तत्प्रकारश्चेत्थम्—अध्वर्युः आहवनीयाग्नेः पूर्वतः गार्हपत्यस्य पश्चिमतो वा तत्राऽपि पत्न्या मध्यतो वा बाह्यतो वा गार्हपत्यस्यैशानदेशं गत्वा उपविश्य दक्षिणं जानु भूमौ निपात्य स्थाल्याज्येन चतस्रो देवता अध्वर्युर्यजेदिति ।

प्प्रजाः प्प्रजायन्ते यज्ञात्प्रजायमाना मिथुनात् प्रजायन्ते मिथुनात्प्रजायमाना ऽअन्ततो यज्ञस्य प्प्रजायन्ते तदेना ऽएतदन्ततो यज्ञस्य मिथुनात्प्रजननात्प्रजनयति तस्मा-न्मिथुनात्प्रजननादन्ततो यज्ञस्येमाः प्प्रजाः प्प्रजायन्ते तस्मात्पत्नीः संय्याजयन्ति ॥ ५ ॥ चतस्रो देवता यजति । चतस्रो वै मिथुनं द्वन्द्वं वै मिथुनं द्वे द्वे हि खलु भवतो मिथुनमेवैतत्प्रजननं क्रियते तस्माच्चतस्रो देवता यजति ॥ ६ ॥ ता वा ऽआज्यहविषो भवन्ति । रेतो वा ऽआज्यꣳ रेत ऽएवैतत्सिञ्चति तस्मादाज्यहविषो भवन्ति ॥ ७ ॥ तेनोपाꣳशु चरन्ति । तिर ऽइव वै मिथुनेन चर्य्यते तिर ऽइवैतद्यदुपाꣳशु तस्मादुपाꣳशु चरन्ति ॥ ८ ॥ अथ सोमं यजति । रेतो वै सोमो रेत ऽएवैतत्सिञ्चति तस्मात्सोमं यजति ॥ ९ ॥ अथ त्वष्टारं यजति । त्वष्टा वै सिक्तꣳ रेतो व्विकरोति † तदेष ऽएवैतत्सिक्तꣳ रेतो व्विकरोति तस्मात्त्वष्टारं यजति ॥ १० ॥ अथ देवानां पत्नीर्य्यजति । पत्नीषु वै योनौ रेतः प्प्रतिष्ठितं तत्ततः प्प्रजायते तत्पत्नीष्वे-वैतद्योनौ रेतः सिक्तं प्रतिष्ठापयति तत्ततः प्प्रजायते तस्माद्देवानां पत्नीर्य्यजति ॥ ११ ॥ स यत्र देवानां पत्नी-र्य्यजति । तत्पुरस्तात्तिरः करोत्युप ह वै तावद्देवता ऽआसते यावन्न समिष्टयꣳजुर्जुह्वतीदं नु नो जुह्वत्विति ताभ्य ऽएवै-

† 'ख च' पुस्तके 'तदेष० विकरोति' एतदन्तं यावत् पाठो नोपलभ्यते ।

* 'देवा गातुविदः' इति मन्त्रेण विहितो होमः 'समिष्टयजुः' । सम्य इष्टा देवता इज्यन्ते अनेनेति व्यासवाक्यम् ।

तत्तिरः करोति तस्मादिमा मानुष्य स्त्रियस्तिर ऽइवैव पुꣳसो जिघत्सन्ति या ऽइव तु ता ऽइवेति ह स्माऽऽह याज्ञवल्क्यः ॥ १२ ॥ अथाऽग्निं गृहपतिं यजति । अयं वा ऽअग्निर्लोक ऽइममेवैतल्लोकमिमाः प्प्रजा ऽअभिप्प्रजनयाति ता ऽइमं लोकमिमाः प्प्रजा ऽअभिप्प्रजायन्ते तस्मादग्निं गृहपतिं यजति ॥ १३ ॥ तदिडान्तं भवति । न ह्यत्र परिधयो भवन्ति न प्प्रस्तरो यत्र वा ऽअदः प्प्रस्तरेण यजमानꣳ स्वगाकरोति पतिं वा ऽअनु जाया तदेवाऽस्याऽपि पत्नी स्वगाकृता भवतीयसि तद्ध ह कुर्य्याद्यत्प्रस्तरस्य रूपं कुर्य्यात्तस्मादिडान्तमेव स्यादुतो प्प्रस्तरस्यैव रूपं क्रियते ॥ १४ ॥ स यदि प्प्रस्तरस्य* रूपं कुर्य्यात् । यथैवाऽदः प्प्रस्तरेण यजमानꣳ स्वगाकरोत्त्येवमेवैतत्पत्नीꣳ स्वगाकरोति ॥ १५ ॥ स यदि प्प्रस्तरस्य रूपं कुर्य्यात् । वेदस्यैकं तृणमाच्छिद्याऽग्रं जुह्वामनक्ति मद्ध्यꣳ स्रुवे बुध्नꣳ स्थाल्याम् ॥ १६ ॥ अथाऽग्नीदाहाऽनुप्प्रहरेति । तूष्णीमेवाऽनुप्प्रहृत्त्य '(१)चक्षुष्पा ऽअग्नेऽसि चक्षुर्म्मे पाही'त्त्यात्मानमुपस्पृशति तेनो ऽअप्प्यात्मानं नाऽनुप्प्रव्वृणक्ति ॥१७॥ अथा ऽऽह '(२)संव्वदस्वे'ति । 'अगान(३)ग्नीदगञ्छ्रावय श्रौषट् स्वगा दैव्व्या होतृभ्यः स्वस्तिर्म्मानुषेभ्यः †शंय्योर्ब्रूही'ति ॥ १८ ॥ अथ

* प्रस्तरः कुशमुष्टिः ।

† 'ग' पुस्तके 'शम्योर्ब्रूहि' इत्येव पाठो दृश्यते ।

( १ ) शु० सं० अ० २ क० १६ । ( २ ) का० श्रौ० सू० ३. ६. १५ । ( ३ ) का० श्रौ० सू० ३. ६. १५ ।

जुहूं च स्रुवं* च सम्प्रगृह्णाति । अदो हैवाऽऽहुतिं करोति यदनक्त्याहुतिर्भूत्वा देवलोकं गच्छादिति तस्माज्जुहूं च स्रुवं च सम्प्रगृह्णाति ॥१९॥ स वा ऽअग्नये सम्प्रगृह्णाति । 'अग्ने-ऽदब्धायोऽशीतम'[1] इत्यमृतो ह्यग्निस्तस्मादाहाऽदब्धायविरित्य-शीतमेत्यशिष्टो ह्यग्निस्तस्मादाहाऽशीतमेति 'पाहि[2] मा दिद्योः पाहि प्रसित्यै पाहि दुरिष्ट्यै पाहि दुरद्मन्या' ऽइति सर्वाभ्यो मार्त्तिभ्यो गोपायेत्येवैतदा'हा[3]ऽविषं नः पितुं कृणिव'त्यन्नं वै पितुरनमीवं न ऽइदमकिल्बिषमन्नं कुर्वित्येवैतदाह 'सुषदा[4] योना'वित्यात्मन्नित्येतदाह 'स्वाहा[5] वाडि'ति तद्यथा वषट्कृतꣳ हुतमेवमस्यैतद्भवति ॥ २० ॥ अथ वेदं पत्नी विस्रꣳसयति । योषा वै वेदिर्वृषा वेदो मिथुनाय वै वेदः क्रियतेऽथ यदेनेन यज्ञ ऽउपालभते मिथुनमेवैतत्प्रजननं क्रियते ॥ २१ ॥ अथ यत्पत्नी विस्रꣳसयति । योषा वै पत्नी वृषा वेदो मिथुनमेवैतत्प्रजननं क्रियते तस्माद्वेदं पत्नी विस्रꣳसयति ॥ २२ ॥ सा विस्रꣳसयति । 'वेदोऽसि[6] येन त्वं देव वेद देवेभ्यो वेदोऽभवस्तेन मह्यं वेदो भूया' ऽइति यदि यजुषा चिकीर्षेदेतेनैव कुर्यात् ॥ २३ ॥ तमा वेदेः सꣳस्तृणाति । योषा वै वेदिर्वृषा वेदः पश्चाद्वै परीत्य वृषा योषामधिद्रवति पश्चादेवैनामे-

---

* अङ्गुष्ठपर्वप्रमाणेन वृत्तमुखः स्रुवः सम्पाद्यः ।

तथा च सूत्रम्—'अरत्निमात्रः स्रुवोऽङ्गुष्ठपर्ववृत्तपुष्करः' (का० श्रौ० सू० १. ३. ३९) इति ।

(१) शु० सं० अ० २ क० २० । (२) शु० सं० अ० २ क० २० । (३) शु० सं० अ० २ क० २० । (४) शु० सं० अ० २ क० २० । (५) शु० सं० अ० २ क० २० । (६) शु० सं० अ० २ क० २१ ।

तत्परीत्य ॅवृष्णा व्वेदेनाऽधिद्द्रावयति तस्माद्वा व्वेदेः सᳬस्तृणाति ॥ २४ ॥ अथ समिष्टयजुर्ज्जुहोति । प्प्राङ् मे यज्ञोऽनुसन्तिष्ठाता ऽइत्यथ यद्धुत्वा समिष्टयजुः पत्नीः संख्याजयेत्प्रत्यङ्ड् हैवाऽस्यैष यज्ञः सन्तिष्ठेत तस्माद्वा ऽएतर्हि समिष्टयजुर्ज्जुहोति प्प्राङ् मे यज्ञोऽनुसन्तिष्ठाता ऽइति ॥ २५ ॥ अथ यस्मात्समिष्टयजुर्न्नाम । या वा ऽएतेन यज्ञेन देवता ह्वयति याभ्य ऽएष यज्ञस्तायते सर्व्वा वै तत्ताः समिष्टा भवन्ति तद्यत्तासु सर्व्वासु समिष्टास्वथैतज्जुहोति तस्मात्समिष्टयजुर्न्नाम ॥ २६ ॥ अथ यस्मात्समिष्टयजुर्ज्जुहोति । या वा ऽएतेन यज्ञेन देवता ह्वयति याभ्य ऽएष यज्ञस्तायत ऽउप ह वै ता ऽआसते यावन्न समिष्टयजुर्ज्जुह्वतीदं नु नो जुह्वत्विति ता ऽएवैतद्यथायथं ॅव्यवसृजति यत्र यत्राऽऽसां चरणं तदनु यज्ञं वा ऽएतदजीजनत यदेनमतत तं जनयित्वा यत्राऽस्य प्प्रतिष्ठा तत्प्रतिष्ठापयति तस्मात् समिष्टयजुर्ज्जुहोति ॥ २७ ॥ स जुहोति । 'देवा[1] गातुविद' ऽइति गातुविदो हि देवा 'गातुं[2] वित्त्वे'ति यज्ञं वित्त्वेत्येवैतदाह 'गातुमिते'[3]ति तदेतेन यथायथं ॅव्यवसृजति 'मनसस्पत[4] ऽइमं देव यज्ञᳬ स्वाहा व्वाते धा'ऽइत्ययं वै यज्ञो योऽयं पवते तदिमं यज्ञᳬ सम्भृत्यैतस्मिन्यज्ञे प्प्रतिष्ठापयति यज्ञेन यज्ञᳬ सन्दधाति तस्मादाह स्वाहा व्वाते धा ऽइति ॥ २८ ॥ अथ बर्हिर्ज्जुहोति ।

(१) शु० सं० अ० २ क० २१ । (२) शु० सं० अ० २ क० २१ । (३) शु० सं० अ० २ क० २१ । (४) शु० सं० अ० २ क० २१ ।

अयं वै लोको बर्हिरोषधयो बर्हिरस्मिन्नेवैतल्लोक ऽओषधीर्दधाति ता ऽइमा ऽअस्मिँल्लोक ऽओषधयः प्प्रतिष्ठितास्तस्माद्बर्हिर्जुहोति ॥ २९ ॥ तां वा ऽअतिरिक्तां जुहोति । समिष्टयजुर्ह्येवाऽन्तो यज्ञस्य यच्चाप्यूर्ध्वं समिष्टयजुषोऽतिरिक्तं तद्यदा हि समिष्टयजुर्जुहोत्यथैताभ्यो जुहोति तस्मादिमा ऽअतिरिक्ता ऽअसम्मिता ऽओषधयः प्प्रजायन्ते ॥ ३० ॥ स जुहोति । 'सं[1] बर्हिरङ्क्ताᳪं हविषा घृतेन समादित्यैर्व्वसुभिः सं मरुद्भिः समिन्द्रो विश्वदेवेभिरङ्क्तां दिव्व्यं नभो गच्छतु यत्स्वाहे'ति ॥ ३१ ॥ अथ प्प्रणीता दक्षिणतः परीत्य निनयति । युङ्क्ते वा ऽएतद्यज्ञं यदेनं तनुते स यन्न निनयेत्पराङ्ु हाऽविमुक्त ऽएव यज्ञो यजमानं प्रक्षिणीयात्तथो ह यज्ञो यजमानं न प्प्रक्षिणाति तस्मात्प्रणीता दक्षिणतः परीत्य निनयति ॥ ३२ ॥ स निनयति । 'कस्त्वा[2] व्विमुञ्चति स त्वा व्विमुञ्चति कस्मै त्वा व्विमुञ्चति तस्मै त्वा व्विमुञ्चति पोषाये'ति तत्पुष्टिमुत्तमां यजमानाय निराह स येनैव प्प्रणयति* तेन निनयति येन ह्येव योग्यं युञ्जन्ति तेन व्विमुञ्चन्ति योक्त्रेण हि योग्यं युञ्जन्ति योक्त्रेण व्विमुञ्चन्त्यथ †फलीकरणान्कपालेनाऽधोऽधः कृष्णाजिनमुपाऽस्यति 'रक्षसां[3] भागोऽसी'ति ॥ ३३ ॥ देवाश्च वा ऽअसुराश्च । उभये प्प्राजापत्याः पस्पृधिर-

( १ ) शु० सं० अ० २ क० २२ । ( २ ) शु० सं० अ० २ क० २३ । ( ३ ) शु० सं० अ० २ क० २३ ।

* चमसे गृहीता आपः प्रणीताः, तासां स्थापनम् स्वस्थाने निधानम् प्रणीताप्रणयनम् ।

† तण्डुलानां कणादिनिरसनेन शोधनं फलीकरणम् ।

ऽएतस्मिन्यज्ञे प्रजापतौ पितरि संवत्सरेऽस्माकमयं भविष्यत्यस्माकमयं भविष्यतीति ॥ ३४ ॥ ततो देवाः । सर्वं यज्ञꣳ संवृज्याऽथ यत्पापिष्ठं यज्ञस्य भागधेयमासीत्तेनैनान्निरभजन्नस्ना पशोः फलीकरणैर्हविर्यज्ञात्सुनिर्भक्ता ऽअसन्नित्येष वै सुनिर्भक्तो यं भागिनं निर्भजन्त्यथ यमभागं निर्भजन्त्येव स तावच्छꣳसत ऽउत हि वशे लब्ध्वाऽऽह किं मा बभक्थेति स यमेवैभ्यो देवा भागमकल्पयँस्तमेवैभ्य ऽएष ऽएतद्भागं करोत्यथ यदधोऽधः कृष्णाजिनमुपाऽस्यत्यनग्नावेवैभ्य ऽएतदन्धे तमसि प्रवेशयति तथो ऽएवाऽस्नः पशो रक्षसां भागोऽसीत्यनग्नावन्धे तमसि प्रवेशयति तस्मात्पशोस्तेदनीं न कुर्वन्ति रक्षसाꣳ हि स भागः ॥३५॥

नवमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥



सꣳस्थिते यज्ञे । दक्षिणतः परीत्य पूर्णपात्रं निनयति तथा ह्युदग्भवति तस्माद्दक्षिणतः परीत्य पूर्णपात्रं निनयति देवलोके मेऽप्यसदिति वै यजते यो यजते सोऽस्यैष यज्ञो देवलोकमेवाऽभिप्रैति तदनूची दक्षिणा यां ददाति सैति दक्षिणामन्वारभ्य यजमानः ॥ १ ॥ स ऽएष देवयानो वा पितृयाणो वा पन्थाः । तदुभयतोऽग्निशिखे समोषन्त्यौ तिष्ठतः प्रति तमोषतो यः प्रत्युष्योऽस्त्यु तꣳ सृजेते योऽतिसृज्यः शान्तिरापस्तदेतमेवैतत्पन्थानꣳ शमयति ॥ २ ॥ पूर्णं निनयति । सर्वं वै पूर्णꣳ सर्वेणैवैनमेतच्छमयति

सन्ततमव्व्यवच्छिन्नं निनयति सन्ततेनैवैनमेतदव्व्यवच्छि-न्नेन शमयति ॥ ३ ॥ यद्वेव पूर्ण्णपात्रं निनयति । यद्वै यज्ञस्य मिथ्या क्रियतेऽव्यस्य तद्वृहन्ति क्षण्ण्वन्ति शान्तिरापस्तदद्भिः शान्त्या शमयति तदद्भिः सन्दधाति ॥ ४ ॥ पूर्ण्णं निन-यति । सर्व्वं वै पूर्ण्णं सर्व्वेणैवैतत्सन्दधाति सन्ततमव्व्य-वच्छिन्नं निनयति सन्ततेनैवैतदव्व्यवच्छिन्नेन सन्दधाति ॥ ५ ॥ तदञ्जलिना प्प्रतिगृह्णाति । 'सं व्वर्च्चसा पयसा सन्तनूभिरगन्महि मनसा सꣳ शिवेन । त्वष्टा सुदत्रो व्विदधातु रायोऽनुमार्ष्टु तन्वो यद्विलिष्टमि'ति यद्विवृढं तत्सन्दधाति ॥ ६ ॥ अथ मुखमुपस्पृशते । द्वयं तद्यस्मा-न्मुखमुपस्पृशतेऽमृतं वा ऽआपोऽमृतेनैवैतत्सꣳस्पृशत-ऽएतदु चैवैतत्कर्म्मात्मन्कुरुते तस्मान्मुखमुपस्पृशते ॥७॥ अथ व्विष्णुक्रमान्क्रमते । देवान्न्वा ऽएष प्प्रीणाति यो यजत-ऽएतेन यज्ञेनर्ग्भिरिव त्वद्यजुर्भिरिव त्वदाहुतिभिरिव त्वत्स देवान्प्रीत्वा तेष्वपित्वी भवति तेष्वपित्वी भूत्वा तानेवा-ऽभिप्प्रक्रामति ॥ ८ ॥ यद्वेव *व्विष्णुक्रमान्क्रमते । यज्ञो वै व्विष्णुः स देवेभ्य ऽइमां व्विक्रान्तिं व्विचक्रमे यैषामियं व्विक्रान्तिरिदमेव प्प्रथमेन पदेन पस्पाराऽथेदमन्तरिक्षं द्वितीयेन दिवमुत्तमेनैताम्वेवैष ऽएतस्मै व्विष्णुर्यज्ञो व्विक्रान्तिं व्विक्रमते तस्माद्विष्णुक्रमान्क्रमते तद्वा ऽइत ऽएव पराचीनं भूयिष्ठा ऽइव क्रमन्ते ॥ ९ ॥ तदु त[2]त्पृथिव्व्यां व्विष्णुर्व्य-

(१) शु० सं० अ० २ क० २४ । (२) शु० सं० अ० २ क० २५ ।

* विष्णुपादबुद्ध्या स्वपादस्य भूमौ प्रक्षेपाः विष्णुक्रमाः ।

क्रꣳस्त। गायत्रेण च्छन्दसा ततो निर्भक्तो योऽस्मान्द्वेष्टि यं च वयं द्विष्मोऽन्तरिक्षे विष्णुर्व्यक्रꣳस्त त्रैष्टुभेन च्छन्दसा ततो निर्भक्तो योऽस्मान्द्वेष्टि यं च वयं द्विष्मो दिवि विष्णुर्व्यक्रꣳस्त जागतेन च्छन्दसा ततो निर्भक्तो योऽस्मान्द्वेष्टि यं च वयं द्विष्म' इत्येवमिमाँल्लोकान्त्समारुह्याऽथैषा गतिरेषा प्रतिष्ठा य एष तपति तस्य ये रश्मयस्ते सुकृतोऽथ यत्परं भाः प्रजापतिर्वा स स्वर्गो वा लोकस्तदेवमिमाँल्लोकान्त्समारुह्याऽथैतां गतिमेतां प्रतिष्ठां गच्छति परस्तात्त्वेवाऽर्वाङ् क्रमेत य इतोऽनुशासनं चिकीर्षेद् द्वयं तद्यस्मात्परस्तादर्वाङ् क्रमेत* ॥ १० ॥ अपसरणतो ह वा अग्रे देवा जयन्तोऽजयन्। दिवमेवाऽग्रेऽथेदमन्तरिक्षमथेतोऽनपसरणात्सपत्नाननुदन्त तथो एवैष एतदपसरणत एवाऽग्रे जयञ्जयति दिवमेवाऽग्रेऽथेदमन्तरिक्षमथेतोऽनपसरणात्सपत्नान्नुदत इयं वै पृथिवी प्रतिष्ठा तदस्यामेवैतत्प्रतिष्ठायां प्रतितिष्ठति ॥ ११ ॥ तद्व 'तद्दिवि विष्णुर्व्यक्रꣳस्त'(१)। जागतेन च्छन्दसा ततो निर्भक्तो योऽस्मान्द्वेष्टि यश्च वयं द्विष्मोऽन्तरिक्षे विष्णुर्व्यक्रꣳस्त त्रैष्टुभेन च्छन्दसा ततो निर्भक्तो योऽस्मान्द्वेष्टि यं च

---

* 'क्रमते' इति 'ग' पुस्तके।

† प्राङ्मुखो यजमान उत्थाय दक्षिणवेदिश्रोणेरारभ्य आहवनीयादर्वाक् 'दिवि विष्णुः' 'अन्तरिक्षे विष्णुः' 'पृथिव्यां विष्णुः' इति त्रिभिर्मन्त्रैः विष्णुक्रमाख्यान् क्रमणान् विदध्यादिति।

अथवा प्रथमक्रमणे 'पृथिव्यां विष्णुः' द्वितीये 'अन्तरिक्षे विष्णुः' तृतीये 'दिवि विष्णुः' इति मन्त्रक्रमे विकल्पो बोध्यः।

(१) शु० सं० अ० २ क० २५।

वयं द्विष्मः पृथिव्यां विष्णुर्व्यक्रꣳस्त गायत्रेण च्छन्दसा ततो निर्भक्तो योऽस्मान् द्वेष्टि यं च वयं द्विष्मोऽस्मादन्नादस्यै प्रतिष्ठाया' ऽइत्यस्याꣳ हीदꣳ सर्वमन्नाद्यं प्रतिष्ठितं तस्मादाहाऽस्मादन्नादस्यै प्रतिष्ठाया ऽइति ॥ १२ ॥ अथ प्राङ् प्रेक्षते । प्राची हि देवानां दिक्तस्मात्प्राङ् प्रेक्षते ॥ १३ ॥ स प्रेक्षते । [1]'अगन्म स्वरि'ति देवा वै स्वरगन्म देवानित्येवैतदाह [2]'सञ्ज्योतिषाऽभूमे'ति सन्देवैरभूमेत्येवैतदाह ॥ १४ ॥ अथ सूर्यमुदीक्षते । सैषा गतिरेषा प्रतिष्ठा तदेतां गतिमेतां प्रतिष्ठां गच्छति तस्मात्सूर्यमुदीक्षते ॥ १५ ॥ स ऽउदीक्षते । [3]'स्वयम्भूरसि श्रेष्ठो रश्मिरि'त्येष वै श्रेष्ठो रश्मिर्यत्सूर्यस्तस्मादाह स्वयम्भूरसि श्रेष्ठो रश्मिरिति [4]'वर्चोदा ऽअसि वर्चो मे देही'ति त्वेवाऽहं ब्रवीमीति ह स्माऽऽह याज्ञवल्क्यस्तद्ध्येव ब्राह्मणेनैष्टव्यं यद् ब्रह्मवर्चसी स्यादित्युतो ह स्माऽऽहौपोदिते य ऽएष वाऽव मह्यं गा दास्यति गोदा गा मे देहीत्येवं यं कामं कामयते सोऽस्मै कामः समृध्यते ॥ १६ ॥ अथाऽऽवर्त्तते । [5]'सूर्यस्याऽऽवृतमन्वावर्त्त' ऽइति तदेतां गतिमेतां प्रतिष्ठां गत्वैतस्यै वाऽऽवृतमन्वावर्त्तते ॥ १७ ॥ अथ गार्हपत्यमुपतिष्ठते । द्वयं तद्यस्माद् गार्हपत्यमुपतिष्ठते गृहा वै गार्हपत्यो गृहा वै प्रतिष्ठा तद् गृहेष्वेवैतत्प्रतिष्ठायां प्रतितिष्ठति यावद्वेवाऽस्येह मानुषमायुस्तस्मा ऽएवैतदुपतिष्ठते तस्माद् गार्हपत्यमुपति-

---

( १ ) शु० सं० अ० २ क० २५। ( २ ) शु० सं० अ० २ क० २५। ( ३ ) शु० सं० अ० २ क० २६। ( ४ ) शु० सं० अ० २ क० २६। ( ५ ) शु० सं० अ० २ क० २६।

ष्ठते ॥ १८ ॥ स ऽउपतिष्ठते । '[1]अग्ने गृहपते सुगृहपतिस्त्वयाऽग्नेऽहं गृहपतिना भूयासꣳ सुगृहपतिस्त्वम्मयाऽग्ने गृहपतिना भूया' ऽइति नाऽत्र तिरोहितमिवा'ऽस्त्यस्थूरि[2]* णौ गार्हपत्यानि सन्त्वि'त्यनार्त्तानि नौ गार्हपत्यानि सन्त्वित्येवैतदाह '[3]शतꣳ हिमा' ऽइति शतं व्वर्षाणि जीव्यासमित्येवैतदाह तदप्प्येतद् ब्रुवन्नाऽऽद्रियेताऽपि हि भूयाꣳसि शताद्वर्षेभ्यः पुरुषो जीवति तस्मादप्प्येतद् ब्रुवन्नाऽऽद्रियेत ॥१९॥ अथाऽऽवर्त्तते । '[4]सूर्य्यस्याऽऽवृतमन्न्वावर्त्ते' ऽइति तदेतां गतिमेतां प्रतिष्ठां गत्त्वैतस्यैवाऽऽवृतमन्न्वावर्त्तते ॥ २० ॥ अथ पुत्रस्य नाम गृह्णाति । '[5]इदं मेऽयं व्वीर्य्यं पुत्रोऽनुसन्तनवादि'ति यदि पुत्रो न स्यादप्प्यात्मन ऽएव नाम गृह्णीयात् ॥ २१ ॥ अथाऽऽहवनीयमुपतिष्ठते । प्प्राङ् मे यज्ञोऽनुसन्तिष्ठाता ऽइति तूष्णीमुपतिष्ठते ॥ २२ ॥ अथ व्व्रतं व्विसृजते । '[6]इदमहं य ऽएवाऽस्मि सोऽस्मी'त्यमानुष ऽइव वा ऽएतद्भवति यद् व्रतमुपैति न हि तदवकल्पते यद् ब्रूयादिदमहꣳ सत्त्यादनृतमुपैमीति तदु खलु पुनर्म्मानुषो

(१) शु० सं० अ० २ क० २७। (२) शु० सं० अ० २ क० २७। (३) शु० सं० अ० २ क० २७ । (४) शु० सं० अ० २ क० २७ । (५) मन्त्रोऽयं शाखान्तरीयः । कातीयसूत्रे तु-'इदं मे कर्मेदं वीर्यं पुत्रोऽनु सन्तनोतु ( का० श्रौ० ३. ८. २२ ) इति । ( ६ ) शु० सं० अ० २ क० २८ ।

* एकाश्वयुक्तः शकटः स्थूरिरित्युच्यते, तद्विपरीतो बहुभिरश्वैरुपेतः शकटोऽस्थूरिरिति ऋ० सं० भाष्ये ( ६. १५. १९ )। शुक्लयजुःसंहिताभाष्ये तु—एकपार्श्वे बलीवर्दयुक्तं शकटं स्थूरि, न स्थूरि अस्थूरि ( २. २७ ) इति ।

पाण्या ऽअङ्गुलयो दश पाद्या दश प्राणा ऽआत्मैकत्रिंशो यस्मिन्नेते प्राणाः प्रतिष्ठिता ऽएतावान्वै पुरुषः पुरुषो यज्ञः पुरुषसम्मितो यज्ञः स यावानेव यज्ञो यावत्यस्य मात्रा तावन्तमेवैनमेतदाप्नोति यदनुष्टुभैकत्रिंशदक्षरया जुहोति ॥ २३ ॥

प्रथमाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

इति प्रथमोऽध्यायः ॥ १ ॥



दक्षिणेनाऽऽहवनीयं प्राचीनग्रीवे कृष्णाजिने ऽउपस्तृणाति। तयोरेनमधि दीक्षयति यदि द्वे भवस्तदनयोर्ल्लोकयोरूपं तदेनमनयोर्ल्लोकयोरधि दीक्षयति ॥ १ ॥ सम्बद्धान्ते भवतः। सबद्धाविव हीमौ लोकौ तर्ह्यसमुते पश्चाद्भवतस्तदिमावेव लोकौ मिथुनीकृत्य तयोरेनमधि दीक्षयति ॥२॥ यद्यु ऽएकं भवति। तदेषां लोकानाᳬं रूपं तदेनमेषु लोकेष्वधि दीक्षयति यानि शुक्लानि तानि दिवो रूपं यानि कृष्णानि तान्यस्यै यदि वेतरथा यान्येव कृष्णानि तानि दिवो रूपं यानि शुक्लानि तान्यस्यै यान्येव बभ्रूणीव हरीणि तान्यन्तरिक्षस्य रूपं तदेनमेषु लोकेष्वधि दीक्षयति ॥ ३ ॥ अन्तकमु तर्हि पश्चात्प्रत्यस्येत्। तदिमानेव लोकान्मिथुनीकृत्य तेष्वेनमधि दीक्षयति ॥४॥ अथ जघनेन कृष्णाजिने पश्चात् प्राङ् *जान्वाक्न ऽउपविशति। स यत्र शुक्लानां च

* जान्वाक्नः सङ्कुचितजानुक इत्यर्थः।

कृष्णानां च सन्धिर्भवति तदेवमभिमृश्य जप'त्यृक्सामयोः शिल्पे स्त्थ, ऽइति यद्वै प्प्रतिरूपं तच्छिल्पमृचां च साम्म्नां च प्प्रतिरूपे स्त्थ ऽइत्त्येवैतदाह ॥५॥ 'ते वामारभ' ऽइति। गर्ब्भो वा ऽएष भवति यो दीक्षते स छन्दाᳯंसि प्प्रविशति तस्मान्न्यक्काङ्गुलिरिव भवति न्न्यक्काङ्गुलय ऽइव हि गर्ब्भाः ॥ ६ ॥ स यदाह । ते वामारभ ऽइति ते वाम्प्रविशामीत्त्येवैतदाह 'ते मा पातमास्य यज्ञस्योदृच' ऽइति ते मा गोपायतमास्य यज्ञस्य सᳯंस्थाया ऽइत्त्येवैतदाह ॥ ७ ॥ अथ दक्षिणेन जानुनाऽऽरोहति । 'शर्म्मासि शर्म्म मे यच्छे'ति चर्म्म वा ऽएतत्कृष्णस्य तदस्य तन्मानुषᳪ शर्म्म देवत्रा तस्मादाह शर्म्मासि शर्म्म मे यच्छेति 'नमस्ते ऽअस्तु मा मा हिᳪसीरि'ति श्रेयाᳯंसं वा ऽएष ऽउपाधिरोहति यो यज्ञं यज्ञो हि कृष्णाजिनं तस्मा ऽएवैतद्यज्ञाय निह्नुते तथो हैनमेष यज्ञो न हिनस्ति तस्मादाह नमस्ते ऽअस्तु मा मा हिᳪसीरिति ॥ ८ ॥ स वै जघनार्द्ध ऽइवैवाऽग्र ऽआसीत । अथ यदग्र ऽएव मद्ध्य ऽउपविशेद्य ऽएनं तत्राऽनुव्याहरेद्प्पस्यति वा प्प्र वा पतिष्यतीति तथा हैव स्यात्तस्माज्जघनार्द्ध ऽइवैवाऽग्र ऽआसीत ॥ ९ ॥ अथ मेखलां परिहरते । अङ्गिरसो ह वै दीक्षितानबल्यमविन्दत्ते नाऽन्न्यद्व्रतादशनमवाऽकल्पयँस्त ऽएतामूर्ज्जमपश्यन्त्समाप्तिं तां मद्ध्यत ऽआत्मन ऽऊर्ज्जमदधत समाप्तिं तया समाप्नु-

( १ ) शु० सं० अ० ४ क० ९ । ( २ ) शु० सं० अ० ४ क० ९ । ( ३ ) शु० सं० अ० ४ क० ९ । ( ४ ) शु० सं० अ० ४ क० ९ । ( ५ ) शु० सं० अ० ४ क० ९ ।

वँस्तथो ऽएवैष ऽएतां मद्धयत ऽआरमन ऽऊर्ज्जं धत्ते समाप्तिं तया समाप्नोति ॥ १० ॥ सा वै शाणी भवति । मृद्ध्य-सादिति न्न्वेव शाणी यत्र वै प्प्रजापतिरजायत गब्भों भूत्वैतस्माद्यज्ञात्तस्य यन्नेदिष्ठमुल्वमासीत्ते शणास्तस्मात्ते पूतयो वान्ति यद्वस्य जरारुवासीत्तद्दीक्षितवसनमन्तरं व्वा ऽउल्बं जरायुणो भवति तस्मादेषाऽन्तरा व्वाससो भवति यथैवाऽतः प्प्रजापतिरजायत गब्भों भूत्वैतस्माद्यज्ञादेवमेवै-षोऽतो जायते गब्भों भूत्वैतस्माद्यज्ञात् ॥ ११ ॥ सा वै त्रिवृद्भवति । त्रिवृद्ध्यन्नं पशवो ह्यन्नं पिता माता यज्जायते तत्तृतीयं तस्मात्त्रिवृद्भवति ॥ १२॥ मुञ्जवल्शेनाऽन्न्वस्ता भवति । व्वज्रो वै शरो विरक्षस्तायै स्तुकासर्गथं सृष्टा भवति सा यत्प्रसलवि सृष्टा स्याद्यथेदमन्न्या रज्जवो मानुषी स्याद्यद्वपसलवि सृष्टा स्यात्पितृदेवत्त्या स्यात्तस्मा-त्स्तुकासर्गथं सृष्टा भवति ॥ १३ ॥ तां परिहरते । 'ऊर्ग्ग-स्याङ्गिरसी'त्यङ्गिरसो ह्येतामूर्जमपश्य'न्नूर्णम्म्रदा[2] ऽऊर्ज्जं मयि धेही'ति नाऽत्र तिरोहितमिवाऽस्ति ॥ १४ ॥ अथ-नीविमुद्गूहते । 'सोमस्य[3] नीविरसी'त्यदीक्षितस्य वा ऽअस्यैषाऽग्रे नीविर्भवत्यथाऽत्र दीक्षितस्य सोमस्य तस्मा-दाह सोमस्य नीविरसीति ॥ १५ ॥ अथ प्प्रोर्ण्णुते । गब्भों वा ऽएष भवति यो दीक्षते प्प्राऽऽवृता वै गब्भा ऽउल्बेनेव जरायुणेव तस्माद्वै प्प्रोर्ण्णुते ॥ १६ ॥ स प्प्रोर्ण्णुते । 'व्विष्णोः

(१) शु० सं० अ० ४ क० १० । (२) शु० सं० अ० ४ क० १० । (३) शु० सं० अ० ४ क० १० । (४) शु० सं० अ० ४ क० १० ।

शर्म्मासि शर्म्म यजमानस्ये'त्युभयं वा ऽएषोऽत्र भवति यो दीक्षते विष्णुश्च यजमानश्च यदुह दीक्षते तद्विष्णु-र्भवति यद्यजते तद्यजमानस्तस्मादाह विष्णोः शर्म्मासि शर्म्म यजमानस्येति ॥ १७ ॥ अथ कृष्णविषाणाꣳ सिचि बध्नीते। देवाश्च वा ऽअसुराश्चोभये प्राजापत्याः प्रजा-पतेः पितुर्दायमुपेयुर्म्मन ऽएव देवा ऽउपायन्वाचमसुरा यज्ञमेव तद्देवा ऽउपायन्वाचमसुरा ऽअमूमेव देवा ऽउपा-यन्निमामसुराः ॥ १८ ॥ ते देवा यज्ञमब्रुवन्। योषा वा ऽइयं वागुपमन्त्रयस्व ह्वयिष्यते वै त्वेति स्वयं वा हैवैक्षत योषा वा ऽइयं वागुपमन्त्रयै ह्वयिष्यते वै मेति तामुपाऽऽ-मन्त्रयत सा हाऽस्मा ऽआरकादिवैवाऽग्र ऽआसूयत्तस्मादु स्त्री पुꣳसोपमन्त्रिताऽऽरकादिवैवाऽग्रेऽसूयति स होवा-चाऽऽरकादिव वै म ऽआसूयीदिति ॥ १९ ॥ ते होचुः। उपैव भगवो मन्त्रयस्व ह्वयिष्यते वै त्वेति तामुपाऽऽमन्त्रयत सा हाऽस्मै निपलाशमिवोवाद तस्मादु स्त्री पुꣳसोप-मन्त्रिता निपलाशमिवैव वदति स होवाच निपलाशमिव वै मेऽवादीदिति ॥ २० ॥ ते होचुः। उपैव भगवो मन्त्र-यस्व ह्वयिष्यते वै त्वेति तामुपाऽऽमन्त्रयत सा हैनं जुहुवे तस्मादु स्त्री पुमाꣳसꣳ ह्वयन्त ऽएवोत्तमꣳ स होवा-चाऽऽह्वत वै मेति ॥ २१ ॥ ते देवा ऽईक्षाञ्चक्रिरे। योषा वा ऽइयं वाग्यदेनं न युवितेहैव मा तिष्ठन्तमभ्येहीति ब्रूहि तां तु न ऽआगतां प्रति प्रब्रूतादिति सा हैनं तदेव तिष्ठन्तमभ्येयाय तस्मादु स्त्री पुमाꣳसꣳ सꣳस्कृते

तिष्ठन्तमभ्यैति ताᳬं हैभ्य ऽआगतां प्रति प्रोवाचेयं वा-ऽआगादिति ॥ २२ ॥ तां देवाः । असुरेभ्योऽन्तरायँस्ताᳬं-स्वीकृत्याऽग्नावेव परिगृह्य सर्वहुतमजुहवुराहुतिर्हि देवानाᳬं स यामेवाऽमूमनुष्टुभा जुहवुस्तद्देवैनां तद्देवाः स्व्यकुर्वत तेऽसुरा ऽआत्तवचसो हेऽलवो हेऽलव ऽइति वदन्तः पराबभूवुः ॥ २३ ॥ तत्रैतामपि वाचमूदुः । उपजिज्ञास्याᳬं स म्लेच्छस्तस्मान्न ब्राह्मणो म्लेच्छेदसुर्या हैषा वा वागेव-मेवैष द्विषताᳬं सपत्नानामादत्ते वाचन्तेऽस्याऽऽत्तवचसः पराभवन्ति य ऽएवमेतद्वेद ॥ २४ ॥ सोऽयं यज्ञो वाचम-भिदध्यौ । मिथुन्न्येनया स्यामिति ताᳬं सम्बभूव ॥ २५ ॥ इन्द्रो ह वा ऽईक्षाञ्चक्रे । महद्वा ऽइतोऽभ्वं जनिष्यते यज्ञस्य च मिथुनाद्वाचश्च यन्मा तन्नाऽभिभवेदिति स-ऽइन्द्र ऽएव गर्ब्भो भूत्वैतन्मिथुनं प्रविवेश ॥ २६ ॥ स ह संवत्सरे जायमान ऽईक्षाञ्चक्रे । महावीर्य्या वा ऽइयं योनिर्य्या मामदीधरत यद्वै मेतो महदेवाऽभ्वं नाऽनुप्रजा-येत यन्मा तन्नाऽभिभवेदिति ॥ २७ ॥ तां प्रतिपरामृश्या-ऽऽवेष्ट्याऽच्छिनत् । तां यज्ञस्य शीर्षन्प्रत्यदधाद्यज्ञो हि कृष्णः स यः स यज्ञस्तत्कृष्णाजिनं यो सा योनिः सा कृष्णविषाणाऽथ यदेनामिन्द्र ऽआवेष्ट्याऽऽच्छिनत्तस्मादा-वेष्टितेव स यथैवाऽत ऽइन्द्रोऽजायत गर्ब्भो भूत्वैतस्मा-न्मिथुनादेवमेवैषोऽतो जायते गर्ब्भो भूत्वैतस्मान्मिथु-नात् ॥ २८ ॥ तां वा ऽउत्तानामिव बध्नाति । उत्तानेव वै योनिर्गर्ब्भं बिभर्त्त्यथ दक्षिणां भ्रुवमुपर्य्युपरि ललाट-

मुपस्पृश'[1]तीन्द्रस्य योनिरसी'तीन्द्रस्य ह्येषा योनिरतो वा ह्येनां प्रविशन्प्रविशत्यतो वा जायमानो जायते तस्मादा- हेन्द्रस्य योनिरसीति ॥ २९ ॥* अथोल्लिखति । 'सुसस्या[2]ः कृषीस्कृधी'ति यज्ञमेवैतज्जनयति यदा वै सुषमं भवत्यथाऽलं यज्ञाय भवति यदो दुःषमं भवति न तर्ह्यात्मने च नाऽलं भवति तद्यज्ञमेवैतज्जनयति ॥ ३० ॥ अथ न दीक्षितः । काष्ठेन वा नखेन वा कण्डूयेत गर्भो वा ऽएष भवति यो दीक्षते यो वै गर्भस्य काष्ठेन वा नखेन वा कण्डूये- दुपास्यन्निर्ऋत्येत्ततो दीक्षितः पामनो भवितोर्दीक्षितं वा ऽअनु रेताꣳसि ततो रेताꣳसि पामनानि जनितोः स्वा वै योनी रेतो न हिनस्त्येषा वा ऽएतस्य स्वा योनिर्भवति यत्कृष्णविषाणा तथो हैनमेषा न हिनस्ति तस्माद्दीक्षितः कृष्णविषाणयैव कण्डूयेत नाऽन्येन कृष्णविषाणायाः ॥३१॥ अथाऽस्मै दण्डं प्रयच्छति । वज्रो वै दण्डो विरक्षस्तायै ॥३२॥ औदुम्बरो भवति। अन्नं वा ऽऊर्गुदुम्बर ऽऊर्ज्जोऽन्ना- द्यस्याऽवरुद्ध्यै तस्मादौदुम्बरो भवति ॥३३॥ मुखसम्मितो भवति । एतावद्धै वीर्यꣳ स यावदेव वीर्यं तावाँस्तद्भवति यन्मुखसम्मितः ॥ ३४ ॥ तमुच्छ्रयति । 'उच्छ्र[3]यस्व वन- स्पत ऽऊर्ध्वो मा पाह्यꣳहस ऽआस्य यज्ञस्योदृच' ऽइत्यूर्ध्वो मा गोपायाऽस्य यज्ञस्य सꣳस्थाया ऽइत्येवैतदाह ॥ ३५ ॥ अत्र हैके । अङ्गुलीश्च न्यचन्ति वाचं च यच्छन्त्यतो हि

* अत्र शतम् १५०० ॥

(१) शु० सं० अ० ४ क० १० । (२) शु० सं० अ० ४ क० १० । (३) शु० सं० अ० ४ क० १० ।

किञ्च न जपिष्यन्न्भवतीति व्वदन्तस्तदु तथा न कुर्य्याद्यथा पराञ्चं धावन्तमनुलिप्सेत तं नाऽनुलभेतैवᳫं ह स यज्ञं नाऽनुलभते तस्मादमुत्रैवाऽङ्गुलीन्न्यृचेदमुत्र व्वाचं यच्छेत् ॥ ३६ ॥ अथ यद्दीक्षितः । ऋचं वा यजुर्वा साम वाऽभिव्व्याहरत्यभिस्थिरमभिस्थिरमेवैतद्यज्ञमारभते तस्मादमुत्रैवाऽङ्गुलीन्न्यृचेदमुत्र व्वाचं यच्छेत् ॥ ३७ ॥ अथ यद्वाचं यच्छति । व्वाग्वै यज्ञो यज्ञमेवैतदात्मन्धत्तेऽथ यद्वाचंयमो व्व्याहरति तस्मादु हैष व्विसृष्टो यज्ञः पराङ्ङावर्त्तते तत्रो व्वैष्णवीमृचं वा यजुर्वा जपेद्यज्ञो वै व्विष्णुस्तद्यज्ञं पुनरारभते तस्यो हैषा प्प्रायश्चित्तिः ॥ ३८ ॥ अथैकऽउद्वदति । दीक्षितोऽयं ब्राह्मणो दीक्षितोऽयं ब्राह्मणऽइति निवेदितमेवैनमेतत्सन्तं देवेभ्यो निवेदयत्ययं महावीर्य्यो यो यज्ञं प्रापदित्ययं युष्माकैकोऽभूत्तं गोपायतेत्येवैतदाह त्रिष्कृत्व ऽआह त्रिवृद्धि यज्ञः ॥ ३९ ॥ अथ यद् ब्राह्मण ऽइत्याह । अनद्धेव वा ऽअस्याऽतः पुरा ज्ञानं भवतीदᳫं ह्याहू रक्षाᳫंसि योषितमनु सचन्ते तदुत रक्षाᳫंस्येव रेत ऽआदधतीत्यथाऽत्राऽद्धा जायते यो ब्रह्मणो यो यज्ञाज्जायते तस्मादपि राजन्यं वा व्वैश्यं वा ब्राह्मणऽइत्येव ब्रूयाद् ब्रह्मणो हि जायते यो यज्ञाज्जायते तस्मादाहुर्न्न सवनकृतᳫं हन्यादेनस्वी हैव सवनकृतेति ॥ ४० ॥

द्वितीयाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

माध्यन्दिनीये शतपथब्राह्मणे प्रथमः प्रपाठकः ॥ १ ॥

कण्डिकासंख्या ॥ १२४ ॥



वाचं यच्छति । स वाचंयम ऽआस्त ऽआस्तमयात्त-
यद्वाचं यच्छति ॥ १ ॥ यज्ञेन वै देवाः । इमां जितिं
जिग्युर्येषामियं जितिस्ते होचुः कथं न ऽइदं मनुष्यैर-
नभ्यारोह्यꣳ स्यादिति ते यज्ञस्य रसं धीत्वा यथा मधु
मधुकृतो निर्धयेयुर्विदुह्य यज्ञं यूपेन योपयित्वा तिरो-
ऽभवन्नथ यदेनेनाऽयोपयँस्तस्माद्यूपो नाम ॥ २ ॥ तद्वा-
ऽऋषीणामनुश्रुतमास । ते यज्ञꣳ समभरन्यथाऽयं यज्ञः
सम्भृत ऽएवं वा ऽएष यज्ञꣳ सम्भरति यो दीक्षते वाग्वै
यज्ञः ॥ ३ ॥ तामस्तमिते वाचं विसृजते । संवत्सरो वै
प्रजापतिः प्रजापतिर्यज्ञोऽहोरात्रे वै संवत्सर ऽएते ह्येनं
परिप्लवमाने कुरुतः सोऽहं न दीक्षिष्ट स रात्रिं प्रापत्स
यावानेव यज्ञो यावत्यस्य मात्रा तावन्तमेवैतदाप्त्वा वाचं
विसृजते ॥ ४ ॥ तद्धैके । नक्षत्रं दृष्ट्वा वाचं विसर्जयन्त्यत्रा-
ऽनुष्ठ्याऽस्तमितो भवतीति वदन्तस्तदु तथा न कुर्यात्क
ते स्युर्यन्मेघः स्यात्तस्माद्यत्रैवाऽनुष्ठ्याऽस्तमितं मन्येत
तदेव वाचं विसर्जयेत् ॥ ५ ॥ अनेनो हैके वाचं विसर्जय-
न्ति । 'भूर्भुवः[1] स्वरि'ति यज्ञमाप्याययाऽमो यज्ञꣳ सन्दध्म-
ऽइति वदन्तस्तदु तथा न कुर्यान्न ह स यज्ञमाप्याययति
न सन्दधाति य ऽएतेन वाचं विसर्जयति ॥ ६ ॥ अनेनैव
वाचं विसर्जयेत् । 'व्रतं कृणुत[2] व्रतं कृणुताऽग्निर्ब्रह्माऽग्नि-
र्यज्ञो वनस्पतिर्यज्ञिय' ऽइत्येष ह्यस्याऽत्र यज्ञो भवत्ये-
तद्धविर्यथा पुराऽग्निहोत्रं तद्यज्ञेनैवैतद्यज्ञꣳ सम्भृत्य यज्ञे

(१) शु० सं० अ० ३६ क० ३ । (२) शु० सं० अ० ४ क० ११ ।

यज्ञं प्रतिष्ठापयति यज्ञेन यज्ञꣳ सन्तनोति सन्ततꣳ ह्येवा-ऽस्यैतद्व्रतं भवत्या सुत्यायै त्रिष्कृत्व ऽआह त्रिवृद्धि यज्ञः ॥ ७ ॥ अथाऽग्निमभ्यावृत्य व्वाचं व्विसृजते । न ह स यज्ञमाप्प्याययति न सन्दधाति यो ऽतोऽन्न्येन व्वाचं व्विसृजते स प्प्रथमं व्व्याहरन्त्सत्यं व्वाचोऽभिव्व्याहरति ॥ ८ ॥ अग्निर्ब्रह्मेति । अग्निर्ह्येव ब्रह्माऽग्निर्य्यज्ञ ऽइत्यग्निर्ह्येव यज्ञो व्वनस्पतिर्य्यज्ञिय ऽइति व्वनस्पतयो हि यज्ञिया न हि मनुष्या यजेरन्न्यद्वनस्पतयो न स्युस्तस्मादाह व्वनस्पतिर्य्यज्ञिय ऽइति ॥ ९ ॥ अथाऽस्मै व्रतꣳ श्रपयन्ति । देवान्न्वा ऽएष उपाऽऽवर्त्तते यो दीक्षते स देवतानामेको भवति शृतं व्वै देवानाꣳ हविर्न्नाऽशृतं तस्माच्छ्रपयन्ति तदेष ऽएव व्रतयति नाऽग्नौ जुहोति तद्यदेष ऽएव व्रतयति नाऽग्नौ जुहोति ॥१०॥ यज्ञेन वै देवाः । इमां जितिं जिग्युर्य्यैषामियं जितिस्ते होचुः कथं न ऽइदं मनुष्यैरनभ्यारोह्यꣳ स्यादिति ते यज्ञस्य रसं धीत्त्वा यथा मधु मधुकृतो निर्द्धयेयुर्व्विदुह्य यज्ञं यूपेन योपयित्त्वा तिरोऽभवन्नथ यदेनेनाऽयोपयँस्तस्माद्यूपो नाम ॥ ११ ॥ तद्वा ऽऋषीणामनुश्रुतमास । ते यज्ञꣳ समभर-न्न्यथाऽयं यज्ञः सम्भृत ऽएष वा ऽअत्र यज्ञो भवति यो दीक्षत ऽएष ह्येनं तनुत ऽएष ऽएनं जनयति तद्यदेवाऽत्र यज्ञस्य निर्द्धीतं यद्विदुग्धं तदेवैतत्पुनराप्प्याययति यदेष ऽएव व्रतयति नाऽग्नौ जुहोति न ह्याऽऽप्प्याययेद्यदग्नौ जुहु-याज्जुहुदु हैव मन्न्येत नाऽजुहुत् ॥ १२ ॥ इमे वै प्प्राणाः । मनोजाता मनोयुजो दक्षक्रतवो व्वागेवाऽग्निः प्प्राणोदानौ

मित्रावरुणौ चक्षुरादित्यः श्रोत्रं विश्वे देवा ऽएतासु हैवा- ऽस्यैतद्देवतासु हुतं भवति ॥ १३ ॥ तद्धैके । प्प्रथमे व्रत ऽउभौ व्रीहियवावावपन्त्युभाभ्याᳫं रसाभ्यां यदेवाऽत्र यज्ञस्य निर्धीतं यद्विदुग्धं तत्पुनराप्प्याययाम ऽइति वदन्तो यद्यु व्रतदुघा न दुहीत यस्यैवाऽतः कामयेत तस्य व्रतं कुर्य्यादेतदु ह्येवाऽस्यैता ऽउभौ व्रीहियवावन्न्वारब्धौ भवत ऽइति तदु तथा न कुर्य्यान्न ह स यज्ञमाप्प्याययति न सन्दधाति य ऽउभौ व्रीहियवावावपति तस्मादन्न्यतरमेवा- ऽऽवपेद्धविर्व्वा ऽअस्यैता ऽउभौ व्रीहियवौ भवतः स यदेवा- ऽस्यैतौ हविर्भवतस्तदेवाऽस्यैतावान्न्वारब्धौ भवतो यद्यु व्रतदुघा न दुहीत यस्यैवाऽतः कामयेत तस्य व्रतं कुर्य्यात् ॥ १४ ॥ तद्धैके । प्प्रथमे व्रते सर्व्वौषधᳫं सर्व्वसुरभ्यावपन्ति यदि दीक्षितमार्त्तिर्व्विन्देद्येनैवाऽतः कामयेत तेन भिषज्ज्येद्यथा व्रतेन भिषज्ज्येदिति तदु तथा न कुर्य्यान्न्मानुषᳫं ह ते यज्ञे कुर्व्वन्ति व्यृद्धं वै तद्यज्ञस्य यन्न्मानुषं नेद्व्यृद्धं यज्ञे करवाणीति यदि दीक्षितमार्त्तिर्व्विन्देद्येनैवाऽतः कामयेत तेन भिषज्ज्येत्स- मास्तिर्ह्येव पुण्णया ॥१५॥ अथाऽस्मै व्रतं प्रयच्छति। अतिनीय मानुषं कालᳫं सायं दुग्धमपररात्रे प्प्रातर्दुग्धमपराह्णे व्या- कृत्या ऽएव दैवं चैवैतन्न्मानुषं च व्याकरोति ॥ १६ ॥ अथाऽस्मै व्रतं प्रदास्यन्नप ऽउपस्प्पर्शयति । 'दैवीं धियं मनामहे सुमृडीकामभिष्टये वर्च्चोधां यज्ञवाहसᳫं सुतीर्त्था नो ऽअसद्वश' ऽइति मानुषाय वा ऽएष पुराऽशनायाऽव-

(१) शु० सं० अ० ४ क० ११ ।

नेनिक्तेऽथाऽत्र दैव्यै धियै तस्मादाह दैवीं धियं मनामहे सुमृडीकामभिष्टये वर्च्चोधां यज्ञवाहसꣳ सुतीर्त्था नो ऽअसद्वश ऽइति स यावत्क्रियच्च व्रतं व्रतयिष्यन्नप ऽउपस्पृशेदेतेनैवोपस्पृशेत् ॥ १७ ॥ अथ व्रतं व्रतयति । 'ये देवा मनोजाता मनोयुजो दक्षक्रतवस्ते नोऽवन्तु ते नः पान्तु तेभ्यः स्वाहे'ति तद्यथा वषट्कृतꣳ हुतमेवमस्यैतद्भवति ॥ १८ ॥ अथ व्रतं व्रतयित्वा नाभिमुपस्पृशते । 'श्वात्राः पीता भवत यूयमापो ऽअस्माकमन्तरुदरे सुशेवाः । ता ऽअस्मभ्यमयक्ष्मा ऽअनमीवा ऽअनागसः स्वदन्तु देवीरमृता ऽऋतावृध' ऽइति देवान्वा ऽएष ऽउपाऽऽवर्त्तते यो दीक्षते स देवतानामेको भवत्यनुत्सिक्तं वै देवानाꣳ हविरथैतद्व्रतप्रदो मिथ्याकरोति व्रतमुपोत्सिञ्चन्व्रतं प्रमीणाति तस्यो हैषा प्रायश्चित्तिस्तथो हाऽस्यैतन्न मिथ्याकृतं भवति न व्रतं प्रमीणाति तस्मादाह श्वात्राः पीता भवत यूयमापो ऽअस्माकमन्तरुदरे सुशेवाः । ताऽअस्मभ्यमयक्ष्मा ऽअनमीवा ऽअनागसः स्वदन्तु देवीरमृता ऽऋतावृध ऽइति स यावत्क्रियच्च व्रतं व्रतयित्वा नाभिमुपस्पृशेदेतेनैवोपस्पृशेत्कस्तद्वेद यद्व्रतप्रदो व्रतमुपोत्सिञ्चेत् ॥ १९ ॥ अथ यत्र मेक्ष्यन्भवति । तत्कृष्णविषाणया लोष्टं वा किञ्चिद्वोपह'न्तीयं ते यज्ञिया तनूरि'तीयं वै पृथिवी देवी देवयजनी सा दीक्षितेन नाभिमिह्या

(१) शु० सं० अ० ४ क० ११। (२) शु० सं० अ० ४ क० १२। (३) शु० सं० अ० ४ क० १२। (४) शु० सं० अ० ४ क० १३।

तस्या ऽएतदुदगृह्णैव यज्ञियां तनूमथाऽयज्ञियꣳ शरीरमभिमेह'त्यपो' मुञ्चामि न प्प्रजामि'त्युभयं वा ऽअत ऽएत्याऽऽपश्च रेतश्च स ऽएतदप ऽएव मुञ्चति न प्प्रजा'मꣳहोमुचꣳ स्वाहा कृता' ऽइत्यꣳहस ऽइव ह्येता मुञ्चन्ति यदुदरे गृष्टितं भवति तस्मादाहाऽꣳहोमुच ऽइति स्वाहा कृताꣳ 'पृथिवी माऽऽविशते'त्या'हुतयो भूत्वा शान्ताꣳ पृथिवीमाविशतेत्येवैतदाह ॥ २० ॥ अथ पुनर्ल्लोष्टं न्न्यस्यति । 'पृथिव्व्या सम्भवे'तीयं वै पृथिवी देवी देवयजनी सा दीक्षितेन नाभिमिह्या तस्या ऽएतदुद्धृत्यैव यज्ञियां तनूमथाऽयज्ञियꣳ शरीरमभ्यमिक्षत्तामेवाऽस्यामेतत्पुनर्यज्ञियां तनूं दधाति तस्मादाह पृथिव्व्या सम्भवेति ॥ २१ ॥ अथाऽग्नये परिदाय स्वपिति । देवान्न्वा ऽएष ऽउपा ऽवर्त्तते यो दीक्षते स देवतानामेको भवति न वै देवाꣳ स्वपन्त्यनवरुद्धो वा ऽएतस्याऽस्वप्नो भवत्यग्निर्वै देवानां व्रतपतिस्तस्मा ऽएवैतत्परिदाय स्वपि'त्यग्ने त्वꣳ सु जागृहि वयꣳ सु मन्दिषीमही'त्यग्ने त्वं जागृहि वयꣳ स्वप्स्याम ऽइत्येवैतदाह 'रक्षा णो ऽअप्प्रयुच्छन्नि'ति गोपाय नोऽप्रमत्त ऽइत्येवैतदाह 'प्प्रबुधे नꣳ पुनस्कृधी'ति यथेतꣳ सुप्त्वा स्वस्ति प्प्रबुध्यामहा ऽएवं नꣳ कुर्व्वित्येवैतदाह ॥ २२ ॥ अथ यत्र सुप्त्वा पुनर्न्नाऽवद्रास्यन्न्भवति । तद्वाचयति पुनर्म्मनꣳ पुनरायुर्म्म ऽआगन्न्पुनꣳ प्प्राणꣳ पुनरात्मा म ऽआगन्न्पुनश्चक्षुꣳ

(१) शु० सं० अ० ४ क० १३ । (२) शु० सं० अ० ४ क० १३ । (३) शु० सं० अ० ४ क० १३ । (४) शु० सं० अ० ४ क० १३ । (५) शु० सं० अ० ४ क० १४ । (६) शु० सं० अ० ४ क० १४ । (७) शु० सं० अ० ४ क० १४ ।

पुनः श्रोत्रं म ऽआगन्निति सर्वे ह वा ऽएते स्वपतोऽपक्रामन्ति प्राण ऽएव न तैरेवैतत्सुप्त्वा पुनः सङ्गच्छते तस्मादाह 'पुनर्म्मनः पुनरायुर्म्म ऽआगन्पुनः प्राणः पुनरात्मा म ऽआगन्पुनश्चक्षुः पुनः श्रोत्रं म ऽआगन्। वैश्वानरो ऽअदब्धस्तनूपा ऽअग्निर्न्नः पातु दुरितादवद्यादि'ति तद्य-देवाऽत्र स्वप्नेन वा येन वा मिथ्याकर्म्म तस्मान्नः सर्वस्मा-दग्निर्ग्गोपायत्वित्येवैतदाह तस्मादाह वैश्वानरो ऽअदब्धस्त-नूपा ऽअग्निर्न्नः पातु दुरितादवद्यादिति ॥ २३ ॥ अथ यद्दीक्षितः। अव्रत्यं वा व्व्याहरति क्रुध्यति वा तन्मि-थ्याकरोति व्रतं प्रमीणात्यक्रोधो ह्येव दीक्षितस्याऽग्निर्वै देवानां व्रतपतिस्तमेवैतदुपधावति 'त्वमग्ने व्रतपा ऽअसि देव ऽआ मर्त्येष्वा। त्वं यज्ञेष्वीड्य' ऽइति तस्यो हैषा प्रायश्चित्तिस्तथो हाऽस्यैतन्न मिथ्याकृतं भवति न व्रतं प्रमीणाति तस्मादाह त्वमग्ने व्रतपा ऽअसि देव ऽआ मर्त्येष्वा। त्वं यज्ञेष्वीड्य ऽइति ॥२४॥ अथ यद्दीक्षितायाऽभिहरन्ति। तस्मिन्वाचयति 'रास्वेयत्सोमा भूयो भरे'ति सोमो ह वा ऽअस्मा ऽएतद्युते यद्दीक्षितायाऽभिहरन्ति स यदाह रास्वे-यत्सोमेति रास्व न ऽइयत्सोमेत्येवैतदाहा भूयो भरेत्या नो भूयो हरेत्येवैतदाह 'देवो नः सविता वसोर्द्दाता वस्वदादि'ति तथो हाऽस्मा ऽएतत्सवितृप्रसूतमेव दानाय भवति ॥ २५ ॥ पुराऽस्तमयादाह। दीक्षित वाचं यच्छेति

(१) शु० सं० अ० ४ क० १५। (२) शु० सं० अ० ४ क० १६। (३) शु० सं० अ० ४ क० १६। (४) शु० सं० अ० ४ क० १६।

तामस्तमिते व्वाचं व्विसृजते पुरोदयादाह दीक्षित व्वाचं यच्छेति तामुदिते व्वाचं व्विसृजते सन्तत्या ऽएव्वाऽऽहरेवैत-द्रात्र्या सन्तनोत्यहा रात्रिम् ॥ २६ ॥ नैनमन्यत्र चरन्तम-भ्यस्तमियात् । न स्वपन्तमभ्युदियात्स यदेनमन्यत्र चरन्तमभ्यस्तमियाद्रात्रेरेनं तदन्तरियाद्यत्स्वपन्तमभ्युदि-यादह्न ऽएनं तदन्तरियान्नाऽत्र प्प्रायश्चित्तिरस्ति प्प्रतिगु-प्प्यमेवैतस्मान्न पुराऽवभृथादपोऽभ्यवेयान्नैनमभिवर्षेद-नवक्लृप्तःह तद्यत्पुराऽवभृथादपोऽभ्यवेयाद्यद्वैनमभिव-र्षेदथ परिह्वालं व्वाचं वदति न मानुषीं प्रसृतां तद्यत्परिह्वालं व्वाचं व्वदति न मानुषीं प्रसृताम् ॥ २७ ॥ यज्ञेन वै देवाः । इमां जितिं जिग्युर्यैषामियं जितिस्ते होचुः कथं न ऽइदं मनुष्यैरनभ्यारोह्यꣳ स्यादिति ते यज्ञस्य रसं धीत्वा यथा मधु मधुकृतो निर्द्धयेयुर्व्विदुह्य यज्ञं यूपेन योपयित्वा तिरो-ऽभवन्नथयदेनेनाऽयोपयँस्तस्माद्यूपो नाम ॥ २८ ॥ तद्वा-ऽऋषीणामनुश्रुतमास । ते यज्ञꣳ समभरन्यथाऽयं यज्ञः सम्भृत ऽएवं व्वा ऽएष यज्ञꣳ सम्भरति यो दीक्षते व्वाग्वै यज्ञस्तद्यदेवाऽत्र यज्ञस्य निर्द्धीतं यद्विदुग्धं तदेवैतत्पुनरा-प्प्याययति यत्परिह्वालं व्वाचं व्वदति न मानुषीं प्रसृतां न हाऽऽप्प्याययेद्यत्प्रसृतां मानुषीं व्वाचं व्वदेत्तस्मात्परिह्वालं व्वाचं वदति न मानुषीं प्रसृताꣳ ॥ २९ ॥ स वै धीक्षते । व्वाचे हि धीक्षते यज्ञाय हि धीक्षते यज्ञो हि व्वाग्धीक्षितो ह वै नामैतद्यद्दीक्षित ऽइति ॥ ३० ॥

द्वितीयाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

आदित्यं चरुं प्रायणीयं निर्व्वपति । देवा ह वा ऽअस्यां यज्ञं तन्वाना ऽइमां यज्ञादन्तरीयुः सा हैषामियं यज्ञं मोहयाञ्चकार कथं नु मयि यज्ञं तन्वाना मां यज्ञादन्तरीयुरिति तद्ध ह यज्ञं न प्प्रजज्ञुः ॥ १ ॥ ते होचुः । यज्ञ्वस्यामेव यज्ञमतथंस्महि कथं नु नोऽमुहत्त्कथं न प्प्रजानीम ऽइति ॥ २ ॥ ते होचुः । अस्यामेव यज्ञं तन्वाना ऽइमां यज्ञादन्तरगाम सा न ऽइयमेव यज्ञममूमुहदिमामेवोपधावामेति ॥ ३ ॥ ते होचुः । यन्नु त्त्वय्येव यज्ञमतथंस्महि कथं नु नोऽमुहत्त्कथं न प्प्रजानीम ऽइति ॥ ४ ॥ सा होवाच । मय्येव यज्ञं तन्वाना मां यज्ञादन्तरगात सा वोऽहमेव यज्ञममूमुहं भागं नु मे कल्पयताऽथ यज्ञं द्रक्ष्यथाऽथ प्प्रज्ञास्यथेति ॥ ५ ॥ तथेति देवा ऽअब्रुवन् । तवैव प्प्रायणीयस्तवोदयनीय ऽइति तस्मादेष ऽआदित्य ऽएव प्प्रायणीयो भवत्त्यादित्य ऽउदयनीय ऽइयꣳ ह्येवाऽदितिस्ततो यज्ञमपश्यँस्तमतन्वत ॥ ६ ॥ स यदादित्यं चरुं प्रायणीयं निर्व्वपति । यज्ञस्यैव दृष्ट्यै यज्ञं दृष्ट्वा क्रीणानि तं तनवाऽइति तस्मादादित्यं चरुं प्रायणीयं निर्व्वपति तद्वै निरुप्तꣳ हविरासीदनिष्टा देवता ॥ ७ ॥ अथैभ्यः पत्थ्या स्वस्तिः प्प्राऽरोचत । तामयजन्वाग्वै पत्थ्या स्वस्तिर्व्वाग्यज्ञस्तद्यज्ञमपश्यँस्तमतन्वत ॥ ८ ॥ अथैभ्योऽग्निः प्प्राऽरोचत । तमयजन्त्स यदाग्नेयं यज्ञस्याऽऽसीत्तदपश्यन्न्यद्वै शुष्कं यज्ञस्य तदाग्नेयं तदपश्यँस्तदतन्वत ॥ ९ ॥ अथैभ्यः सोमः प्प्राऽरोचत । तमयजन्त्स यत्सौम्म्यं यज्ञस्याऽऽसी-

त्तदपश्यन्न्यद्वा ऽआर्द्रं यज्ञस्य तत्सौम्म्यं तदपश्यँस्तदतन्न्वत ॥ १० ॥ अथैभ्यः सविता प्प्राऽरोचत । तमयजन्न्पशवो वै सविता पशवो यज्ञस्तद्यज्ञमपश्यँस्तमतन्न्वताऽथ यस्यै देवतायै हविर्न्निरुप्तमासीत्तामयजन् ॥ ११ ॥ ता वा ऽएताः । पञ्च देवता यजति यो वै स यज्ञो मुग्ध ऽआसीत्पाङ्क्तो वै स ऽआसीत्तमेताभिः पञ्चभिर्द्देवताभिः प्प्राऽजानन् ॥ १२ ॥ ऋतवो मुग्धा ऽआसन्न्पञ्च । तानेताभिरेव पञ्चभिर्द्देवताभिः प्प्राऽजानन् ॥ १३ ॥ दिशो मुग्धा ऽआसन्न्पञ्च । तानेताभिरेव पञ्चभिर्द्देवताभिः प्प्राऽजानन् ॥ १४ ॥ उदीचीमेव दिशम् । पत्थ्यया स्वस्त्या प्प्राऽजानँस्तस्मादत्रोत्तरा हि व्वाग्वदति कुरुपञ्चालत्रा व्वाग्घ्येषा निदानेनोदीचीᳵ ह्येतया दिशं प्राऽजानन्नुदीची ह्येतस्यै दिक् ॥ १५ ॥ प्राचीमेव दिशम् । अग्निना प्प्राऽजानँस्तस्मादग्निं पश्चात्प्राञ्चमुद्धृत्योपाऽऽसते प्प्राचीᳵ ह्येतेन दिशं प्राऽजानन्न्प्राची ह्येतस्य दिक् ॥ १६ ॥ दक्षिणामेव दिशᳵ । सोमेन प्प्राऽजानँस्तस्मात्सोमं क्रीतं दक्षिणा परिवहन्ति तस्मादाहुः पितृदेवत्त्यः सोम ऽइति दक्षिणाᳵ ह्येतेन दिशं प्प्राऽजानन्दक्षिणा ह्येतस्य दिक् ॥ १७ ॥ प्रतीचीमेव दिशᳵ । सवित्रा प्प्राऽजानन्नेष वै सविता य ऽएष तपति तस्मादेष प्प्रत्यङ्ङेति प्प्रतीचीᳵ ह्येतेन दिशं प्प्राऽजानन्न्प्रतीची ह्येतस्य दिक् ॥ १८ ॥ ऊर्द्ध्वामेव दिशम् । अदित्त्या प्प्राऽजानन्निन्यं व्वा ऽअदितिस्तस्मादस्यामूर्द्ध्वाऽओषधयो जायन्त ऽऊर्द्ध्वा व्वनस्पतय ऽऊर्द्ध्वाᳵ ह्येतया

दिशं प्राऽजानन्नूर्ध्वा ह्येतस्यै दिक् ॥ १९ ॥ शिरो वै यज्ञ-
स्याऽऽतिथ्यम् । बाहू प्प्रायणीयोदयनीयावभितो वै शिरो
बाहू भवतस्तस्मादभित ऽआतिथ्यमेते हविषी भवतः
प्प्रायणीयश्चोदनीयश्च ॥ २० ॥ तदाहुः । यदेव प्प्राय-
णीये क्रियेत तदुदयनीये क्रियेत यदेव प्प्रायणीयस्य बर्हि-
र्ब्भवति तदुदयनीयस्य बर्हिर्ब्भवतीति तदपोद्धृत्य निद-
धाति ताꣳ स्थालीꣳ *सक्षामकर्षां प्रमृज्य †मेक्षणं निद-
धाति य ऽएव प्प्रायणीयस्यर्त्विजो भवन्ति त ऽउदयनी-
यस्यर्त्विजो भवन्ति तद्यदेतत्समानं यज्ञे क्रियते तेन बाहू
सदृशौ तेन सरूपौ ॥ २१ ॥ तदु तथा न कुर्यात् । काम-
मेवैतद्बर्हिरनुप्प्रहरेदेवं मेक्षणं निर्णिज्य स्थालीं निदध्याद्य
ऽएव प्प्रायणीयस्यार्त्विजो भवन्ति त ऽउदयनीयस्यर्त्विजो
भवन्ति यद्यु ते विप्प्रेताः स्युरप्यन्य ऽएव स्युः स यद्वै
समानीर्देवता यजति समानानि हवीꣳषि भवन्ति तेनैव
बाहू सदृशौ तेन सरूपौ ॥ २२ ॥ स वै पञ्च प्प्रायणीये
देवता यजति । पञ्चोदयनीये तस्मात्पञ्चेत्थादङ्गुलयः पञ्चे-
त्थात्तच्छँय्वन्तं भवति न पत्नीः सँयाजयन्ति पूर्वार्द्धं
वा ऽअन्नवात्त्मानो बाहू पूर्वार्द्धमेवैतद्यज्ञस्याऽभिसंस्करोति
तस्माच्छँय्वन्तं भवति न पत्नीः सँयाजयन्ति ॥ २३ ॥

द्वितीयाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥



* 'सक्षामकर्षाम्' अग्निसंयोगेनाऽन्तरीषद्दग्धश्चरुः क्षामः तस्य कर्षः लोपस्तत्सहितामित्यर्थः।

† प्रादेशमात्रं हविरवदानसाधनं चरुनिष्पादनसाधनं च काष्ठखण्डं मेक्षणमित्युच्यते। कर्मप्रदीपे तु—"इध्मजातीयमिध्मार्धप्रमाणं मेक्षणं भवेत्।
वृत्तं चाऽङ्गुष्ठपृथ्वग्रमवदानक्रियाक्षमम्" इति। (२. ५. १४)

दिवि वै सोम ऽआसीत्। अथेह देवास्ते देवा ऽअकामयन्ता नः सोमो गच्छेत्तेनाऽऽगतेन यजेमहीति त ऽएते माये ऽअसृजन्त सुपर्णीञ्च कद्रूं च तद्धिरण्यानां ब्राह्मणे व्याख्यायते सौपर्णीकाद्रवं यथा तदास ॥ १ ॥ तेभ्यो गायत्री सोममच्छाऽऽपतत्। तस्या ऽआहरन्त्यै गन्धर्वो विश्वावसुः पर्यमुष्णात्ते देवा ऽअविदुः प्रच्युतो वै परस्तात्सोमोऽथ नो नाऽऽगच्छति गन्धर्वा वै पर्यमोषिषुरिति ॥ २ ॥ ते होचुः। योषित्कामा वै गन्धर्वा वाचमेवैभ्यः प्रहिणवाम सा नः सह सोमेनाऽऽगमिष्यतीति तेभ्यो वाचं प्राहिण्वन्त्सैनान्त्सह सोमेनाऽगच्छत् ॥ ३ ॥ ते गन्धर्वा ऽअन्वागत्याऽब्रुवन्। सोमो युष्माकं वागेवाऽस्माकमिति तथेति देवा ऽअब्रुवन्निहो *चेदागान्मैनामभीषहेव नैष्ट विह्वयामहा ऽइति तां व्यह्वयन्त ॥ ४ ॥ तस्यै गन्धर्वाः। वेदानेव प्रोचिर ऽइति वै वयं विद्मेति वयं विद्मेति ॥५॥ अथ देवाः। वीणामेव सृष्ट्वा वादयन्तो निगायन्तो निषेदुरिति वै ते वयं गास्याम ऽइति त्वा प्रमोदयिष्यामह ऽइति सा देवानुपाऽऽववर्त्त सा वै सा तन्मोघमुपाऽऽववर्त्त या स्तुवद्भ्यः शꣳसद्भ्यो नृत्तं गीतमुपाऽऽववर्त्त तस्मादप्येतर्हि मोघसꣳहिता ऽएवꣳ हि वागुपाऽऽवर्त्तत तामु ह्यन्या ऽअनु योषास्तस्माद्य ऽएव नृत्यति यो गायति तस्मिन्नेवैता निमिश्लतमा ऽइव ॥ ६ ॥ तद्वा ऽएतदुभयं देवेष्वासीत्। सोमश्च वाक्च स यत्सोमं क्रीणात्यागत्या

* 'वेदागात्' इति 'ख' पुस्तके पाठः।

ऽएवाऽऽगतेन यजा ऽइत्यनाऽऽगतेन ह वै स सोमेन यजते योऽक्रीतेन यजते ॥ ७ ॥ अथ यद् ध्रुवायामाज्यं परिशिष्टं भवति । तज्जुह्वां चतुष्कृत्वो विगृह्णाति बर्हिषा हिरण्यं प्रबध्याऽवधाय जुहोति कृत्स्नेन पयसा जुहवानीति समानजन्म वै पयश्च हिरण्यं चोभयꣳ ह्यग्निरेतसꣳ* ॥८॥ स हिरण्यमवद्धाति । 'एषा[1] ते शुक्र तनूरेतद्वर्च' ऽइति वर्चो वा ऽएतद्यद्धिरण्यं 'तया[2] सम्भव भ्राजं गच्छे'ति स यदाह तया सम्भवेति तया सम्पृच्यस्वेत्येवैतदाह भ्राजं गच्छेति सोमो वै भ्राट् सोमं गच्छेत्येवैतदाह ॥ ९ ॥ तां यथैवाऽदो देवाः । प्राऽहिण्वन्त्सोममच्छैवमेवैनामेष ऽएतत्प्रहिणोति सोममच्छ वाग्वै सोमक्रयणी निदानेन तामेतयाऽऽहुत्या प्रीणाति प्रीतया सोमं क्रीणानीति ॥ १० ॥ स जुहोति । 'जूरसीत्ये'[3]तद्ध वा ऽअस्या ऽएकं नाम यज्जूरसीति 'धृता[4] मनसे'ति मनसा वा ऽइयं वाग्धृता मनो वा ऽइदं पुरस्ताद्वाच ऽइत्थं वद मैतद्वादीरित्य†लग्लमिव ह वै वाग्वदेद्यन्मनो न स्यात्तस्मादाह धृता मनसेति ॥ ११ ॥ 'जुष्टा[5] विष्णव' ऽइति । जुष्टा सोमायेत्येवैतदाह यमच्छेम ऽइति 'तस्यास्ते[6] सत्यसवसः प्रसव' ऽइति सत्यप्रसवा न ऽएधि सोमं नोऽच्छेहीत्येवैतदाह

(१) शु० सं० अ० ४ क० १७। (२) शु० सं० अ० ४ क० १७। (३) शु० सं० अ० ४ क० १७। (४) शु० सं० अ० ४ क० १७। (५) शु० सं० अ० ४ क० १७। (६) शु० सं० अ० ४ क० १८।

* 'रेतसम्' इति 'ख' पुस्तके दृश्यते।

† 'अलग्लमिव' इत्यत्र 'अलम्नमिव' इति भाष्यकारसम्मतः। मूलपुस्तके तु 'अलग्लमिव' इत्येव लभ्यते।

'तन्वो यन्त्रमशीय स्वाहे'ति स ह वै तन्वो यन्त्रमश्नुते यो यज्ञस्योदृचं गच्छति यज्ञस्योदृचं गच्छानीत्येवैतदाह ॥ १२ ॥ अथ हिरण्यमपोद्धरति । तन्मनुष्येषु हिरण्यं करोति स यत्सहिरण्यं जुहुयात्पराग्घ हैवैतन्मनुष्येभ्यो हिरण्यं प्रवृञ्ज्यात्तन्न मनुष्येषु हिरण्यमभिगम्येत ॥१३॥ सोऽपोद्धरति । 'शुक्रमसि चन्द्रमस्यमृतमसि वैश्वदेवमसी'ति कृत्स्नेन पयसा हुत्वा यदेवैतत्तदाह शुक्रमसीति शुक्रꣳ ह्येतच्चन्द्रमसीति चन्द्रꣳ ह्येतदमृतमसीत्यमृतꣳ ह्येतद्वैश्वदेवमसीति वैश्वदेवꣳ ह्येतत्प्रमुच्च्य तृणं बर्हिष्यपि सृजति सूत्रेण हिरण्यं प्रबध्नीते ॥ १४ ॥ अथाऽपरं चतुर्गृहीतमाज्यं गृहीत्वा । अन्वारभस्व यजमानेत्याहाऽपोर्णुवन्ति शालायै द्वारे दक्षिणतः सोमक्रयण्युपतिष्ठते तत्प्रहितामेवैनामेतत्सतीं प्राऽऽहैषीद्वाग्वै सोमक्रयणी निदानेन तामेतयाऽऽहुत्याऽप्रैषीत्प्रीतया सोमं क्रीणानीति ॥ १५ ॥ अथोपनिष्क्रम्याऽभिमन्त्रयते । 'चिदसि मनासी'ति चित्तं ह्वा ऽइदं मनो वागनुवदति 'धीरसि दक्षिणे'ति धिया धिया ह्येतया मनुष्या जुज्यूषन्त्यनूक्तेनेव प्रकामोद्येनेव गाथाभिरिव तस्मादाह धीरसीति दक्षिणेति दक्षिणा ह्येषा 'क्षत्रियाऽसि यज्ञियासी'ति क्षत्रिया ह्येषा यज्ञिया ह्येषा 'ऽदितिरस्युभयतः शीर्ष्णी'ति स यदेनया समानꣳ सद्विपर्य्यासं वदति यदपरं तत्पूर्वं करोति यत्पूर्वं तदपरं तेनोभयतः शीर्ष्णी तस्मादाहाऽदि-

(१) शु० सं० अ० ४ क० १८। (२) शु० सं० अ० ४ क० १८। (३) शु० सं० अ० ४ क० १९। (४) शु० सं० अ० ४ क० १९। (५) शु० सं० अ० ४ क० १९। (६) शु० सं० अ० ४ क० १९।

तिरस्युभयतः शीर्ष्णीति ॥ १६ ॥ 'सा[1] नः सुप्राची सुप्रतीच्येधी'ति । सुप्राची न एधि सोमं नोऽच्छेही-त्येवैतदाह सुप्रतीची न एधि सोमेन नः सह पुनरेहीत्ये-वैतदाह तस्मादाह सा नः सुप्राची सुप्रतीच्येधीति ॥१७॥ 'मित्रस्त्वा[2] पदि बध्नीतामि'ति । वरुण्या वा एषा यद्रज्जुः सा यद्रज्ज्वाऽभिहिता स्याद्वरुण्यास्याद्यद्वनभिहिता स्याद्-यतेव स्यादेतद्धा अवरुण्यं यन्मैत्रः सा यथा रज्ज्वाऽभि-हिता यतैवमस्यै तद्भवति यदाह मित्रस्त्वा पदि बध्नी-तामिति ॥ १८ ॥ 'पूषाऽध्वनस्पात्वि[3]'ति । इयं वै पृथिवी पूषा यस्य वा इयमध्वन्गोप्त्री भवति तस्य न का चन ह्वला भवति तस्मादाह पूषाध्वनस्पात्विति ॥१९॥ 'इन्द्रायाऽ[4]-ध्यक्षाये'ति । स्वध्यक्षाऽसदित्येवैतदाह यदाहेन्द्रायाऽध्यक्षा-ये'त्यनु त्वा[5] माता मन्यतामनु पिताऽनु भ्राता सगर्भ्योऽनु सखा सयूथ्य' इति सा यत्ते जन्म तेन नोऽनुमता सोम-मच्छेहीत्येवैतदाह 'सा[6] देवि देवमच्छेही'ति देवी ह्येषा देवमच्छैति यद्वाक्सोमं तस्मादाह सा देवि देवमच्छेही'ती-न्द्राय[7] सोममि'तीन्द्रो वै यज्ञस्य देवता तस्मादाहेन्द्राय सोममिति 'रुद्रस्त्वाऽऽवर्त्तयत्वि'त्यप्रणाशायैतदाह रुद्रः[8] हि नाऽति पशवः 'स्वस्ति[9] सोमसखा पुनरेही'ति स्वस्ति नः सोमेन सह पुनरेहीत्येवैतदाह ॥ २० ॥ तां रुयथैवाऽद्रो

(१) शु० सं० अ० ४ क० १९। (२) शु० सं० अ० ४ क० १९। (३) शु० सं० अ० ४ क० १९। (४) शु० सं० अ० ४ क० १९। (५) शु० सं० अ० ४ क० २०। (६) शु० सं० अ० ४ क० २०। (७) शु० सं० अ० ४ क० २०। (८) शु० सं० अ० ४ क० २०। (९) शु० सं० अ० ४ क० २०।

देवाः । प्राऽहिण्वन्त्सोममच्छ सैनान्त्सह सोमेनाऽऽगच्छ-देवमेवैनामेष ऽएतत्प्रहिणोति सोममच्छ सैनः स ह सोमेनाऽऽगच्छति ॥२१॥ तां ह्यथैवाऽदो देवाः । व्यह्वयन्त गन्धर्वैः सा देवानुपाऽऽवर्त्ततैवमेवैनामेतद्यजमानो विह्वयते सा यजमानमुपाऽऽवर्त्तते तामुदीचीमत्याकुर्वन्त्युदीची हि मनुष्याणां दिक्सो ऽएव यजमानस्य तस्मादुदीचीम-त्याकुर्वन्ति ॥ २२ ॥

द्वितीयाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

इति द्वितीयोऽध्यायः ॥ २ ॥



सप्तपदान्यनु निक्रामति । वृङ्क्त ऽएवैनामेतत्तस्मा-त्सप्तपदान्यनु निक्रामति यत्र वै वाचः प्रजातानि छन्दाᳬसि सप्तपदा वै तेषां परार्ध्या शक्करी तामेवैतत्पर-स्तादर्वाचीं वृङ्क्ते तस्मात्सप्तपदान्यनु निक्रामति ॥ १ ॥ स वै वाच ऽएव रूपेणाऽनु निक्रामति । 'वस्व्यस्यदिति-रस्यादित्याऽसि रुद्राऽसि चन्द्राऽसी'ति वस्वी ह्येषाऽदितिर्ह्येषा-ऽऽदित्या ह्येषा रुद्रा ह्येषा चन्द्रा ह्येषा 'बृहस्पतिष्ट्वा सुम्म्ने रम्म्णात्वि'ति ब्रह्म वै बृहस्पतिर्बृहस्पतिष्ट्वा साऽधुनाऽऽव-र्त्तयत्वित्येवैतदाह 'रुद्रो वसुभिराचक' ऽइत्यप्रणाशायैतदाह रुद्रः हि नाऽति पशवः ॥ २ ॥ अथ सप्तमं पदं पर्युप-विशन्ति । स हिरण्यं पदे निधाय जुहोति न वा ऽअनग्नावा-

(१) शु० सं० अ० ४ क० २१। (२) शु० सं० अ० ४ क० २१। (३) शु० सं० अ० ४ क० २१।

हुतिर्हूयतेऽग्निरेतसं वै हिरण्यं तथो हाऽस्यैषाऽग्निमत्येवाऽऽहुतिर्हुता भवति वज्रो वा ऽआज्यं वज्रेणैवैतदाज्येन स्पृणुते ताᳫं स्पृत्वा स्वीकुरुते ॥ ३ ॥ स जुहोति । 'अदित्यास्त्वा मूर्द्धन्नाजिघर्म्मी'तीयं वै पृथिव्यदितिरस्यै हि मूर्द्धं जुहोति देवयजने पृथिव्या' ऽइति देवयजने हि पृथिव्यै जुहो'तीडायास्पदमसि घृतवत्स्वाहे'ति गौर्वा ऽइडा गोर्हि पदे जुहोति घृतवत्स्वाहेति घृतवद्ध्येतदभिहुतं भवति ॥ ४ ॥ अथ स्फ्यमादाय परिलिखति । वज्रो वै स्फ्यो वज्रेणैवैतत्परिलिखति त्रिष्कृत्वः परिलिखति त्रिवृतैवैतद्वज्रेण समन्तं परिगृह्णात्यनतिक्रमाय ॥ ५ ॥ स परिलिखति । 'अस्मे रमस्वे'ति यजमाने रमस्वेत्त्येवैतदाहाऽथ समुल्लिख्य पदᳫं स्थाल्याᳫं संवपत्य'स्मे ते बन्धुरि'ति यजमाने ते बन्धुरित्त्येवैतदाह ॥ ६ ॥ अथाऽप ऽउपनिनयति । यत्र वा ऽअस्यै खनन्तः क्रूरीकुर्वन्त्यपघ्नन्ति शान्तिरापस्तदद्भिः शान्त्या शमयति तदद्भिः सन्दधाति तस्मादप ऽउपनिनयति ॥ ७ ॥ अथ यजमानाय पदं प्रयच्छति । 'त्वे राय' ऽइति पशवो वै रायस्त्वयि पशव ऽइत्त्येवैतदाह तद्यजमानः प्रतिगृह्णाति 'मे राय' ऽइति पशवो वै रायो मयि पशव ऽइत्त्येवैतदाह ॥ ८ ॥ अथाऽध्वर्युरात्मानमुपस्पृशति । 'मा वयᳫं रायस्पोषेण वि-

(१) शु० सं० अ० ४ क० २२। (२) शु० सं० अ० ४ क० २२। (३) शु० सं० अ० ४ क० २२। (४) शु० सं० अ० ४ क० २२। (५) शु० सं० अ० ४ क० २२। (६) शु० सं० अ० ४ क० २२। (७) शु० सं० अ० ४ क० २२। (८) शु० सं० अ० ४ क० २२।

यौष्मे'ति तथो हाऽद्धूरुर्ध्युः पशुभ्य ऽआत्मानं नाऽन्तरेति ॥ ९ ॥ अथ पत्न्यै पदं प्रतिपराहरन्ति । गृहा वै पत्न्यै प्प्रतिष्ठा तद् गृहेष्वेवैनामेतत्प्रतिष्ठायां प्रतिष्ठापयति तस्मात्पत्न्यै पदं प्रतिपराहरन्ति ॥ १० ॥ तां नेष्टा व्वाचयति । 'तोतो राय' ऽइत्यथैनाᳬ सोमक्रयण्या संख्यापयति व्वृषा वै सोमो योषा पत्न्येष वा ऽअत्र सोमो भवति यत्सोमक्रयणी मिथुनमेवैतत्प्रजननं क्रियते तस्मादेनाᳬ सोमक्रयण्या संख्यापयति ॥११॥ स संख्यापयति । 'सम्मख्ये[2] देव्व्या धिया सन्दक्षिणयोरुचक्षसा । मामऽआयुः प्प्रमोषीर्म्मो ऽअहं तव व्वीरं व्विदेय तव देवि सन्दृशी'त्याशिषमेवैतदाशास्ते पुत्रो वै व्वीरः पुत्रं व्विदेय तव सन्दृशीत्येवैतदाह ॥ १२ ॥ सा या बभ्रुः पिङ्गाक्षी । सा सोमक्रयणी यत्र वा ऽइन्द्राविष्णू त्रेधा सहस्रं व्व्यैरयेतां तदेकाऽत्यरिच्यत तां त्रेधा प्प्राऽजनयतां तस्माद्योऽप्येतर्हि त्रेधा सहस्रं व्व्याकुर्य्यादेकैवाऽतिरिच्येत ॥ १३ ॥ सा या बभ्रुः पिङ्गाक्षी । सा सोमक्रयण्यथ या रोहिणी सा व्वार्त्रघ्नी यामिदᳬ राजा सङ्ग्रामं जित्वोदाकुरुतेऽथ या रोहिणी श्येताक्षी सा पितृदेवत्या यामिदं पितृभ्यो घ्नन्ति ॥ १४ ॥* ॥ सा या बभ्रुः पिङ्गाक्षी । सा सोमक्रयणी स्याद्यदि बभ्रुं पिङ्गाक्षीं न विन्देदरुणा स्याद्यद्यरुणां न विन्देद्रोहिणी व्वार्त्रघ्नी स्याद्रोहिण्यै ह त्वेव श्येताक्ष्या-

(१) शु० सं० अ० ४ क० २२ । (२) शु० सं० अ० ४ क० २३ ।

* अत्र शतम् १६०० ॥

ऽआशाग्नेयात् ॥ १५॥ सा स्यादप्रवीता । वाग्वा ऽएषा निदानेन यत्सोमक्रयण्ययातयाम्नी वा ऽइयं वागयातयाम्न्यप्रवीता तस्मा*दप्रवीता स्यात्सा †स्यादवण्डाकूटाकाणाकर्णालक्षितासप्तशफा सा ‡ ह्येकरूपैकरूपा हीयं वाक् ॥१६॥

तृतीयाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

पदᳯ समुप्य पाणी ऽअवनेनिक्ते । तद्यत्पाणी ऽअवनेनिक्ते वज्रो वा ऽआज्यᳯ रेतᳯ सोमो नेद्वज्रेणाऽऽज्येन रेतᳯ सोमᳯ हिनसानीति तस्मात्पाणी ऽअवनेनिक्ते ॥ १ ॥ अथाऽस्याᳬ हिरण्यं बध्नीते । द्वयं वा ऽइदं न तृतीयमस्ति सत्यं चैवाऽनृतं च सत्यमेव देवा ऽअनृतं मनुष्याऽअग्निरेतसं वै हिरण्यᳯ सत्येनाऽᳬशूनुपस्पृशानि सत्येन सोमं पराहणानीति तस्माद्वा ऽअस्याᳬ हिरण्यं बध्नीते ॥२॥ अथ सम्प्रेष्यति । सोमोपनहनमाहर सोमपर्याणहनमाहरोष्णीषमाहरेति स यदेव शोभनन्तत्सोमोपनहनᳬ स्याद्वासो ह्यस्यैतद्भवति शोभनᳬ ह्येतस्य वासᳯ स यो हैनᳯ शोभनेनोपचरति शोभते हाऽथ य ऽआह यदेव किञ्चेति यद्धैव किञ्च भवति तस्माद्यदेव शोभनं तत्सोमोपनहनᳯ स्याद्यदेव किञ्च सोमपर्याणहनम् ॥ ३ ॥ यद्युष्णीषं विन्देत् । उष्णीषᳯ स्याद्यद्युष्णीषं न विन्देत्सोम-

---

* अप्रवीता अगृहीतगर्भेत्यर्थः ।

† अवण्डेति, वण्डा—वर्द्धिष्णुः तद्विपरीता, कूटा- एकश्रृङ्गी, काणा—प्रसिद्धा, कर्णा—छिन्नकर्णा, लक्षिता—तप्तायःशलाकया विहितेत्यर्थः ।

‡ एकरूपेति, एकरूपत्वं च उक्तदोषवर्जितत्वम्, सम्पूर्णावयवेत्यर्थः ।

पर्य्याणहनस्यैव द्व्यङ्गुलं वा त्र्यङ्गुलं वाऽवकृन्तेदुष्णीषभाजनमध्वर्य्युर्वा यजमानो वा *सोमोपनहनमादत्ते य ऽएव कश्च सोमपर्य्याणहनम् ॥ ४ ॥ अथाऽग्रेण राजानं विचिन्न्वन्ति । तदुदकुम्भ ऽउपनिहितो भवति तद् ब्राह्मण ऽउपाऽऽस्ते तदभ्यायन्ति प्राञ्चः ॥ ५ ॥ तदायत्सु वाचयति । 'एष ते गायत्रो[1] भाग ऽइति मे सोमाय ब्रूतादेष ते त्रैष्टुभो भाग ऽइति मे सोमाय ब्रूतादेष ते जागतो भाग ऽइति मे सोमाय ब्रूताच्छन्दोनामानाᳬ साम्राज्यं गच्छेति मे सोमाय ब्रूतादि'त्येकं वा ऽएष क्रीयमाणोऽभिक्रीयते च्छन्दसामेव राज्याय च्छन्दसाᳬ साम्राज्याय घ्नन्ति वाऽएनमेतद्यदभिषुण्वन्ति तमेतदाह च्छन्दसामेव त्वा राज्याय क्रीणामि च्छन्दसाᳬ साम्राज्याय न बधायेत्यथैत्य प्राङुपविशति ॥ ६ ॥ सोऽभिमृशति । 'अस्माकोऽसी[2]'ति स्वऽइव ह्यस्यैतद्भवति यदागतस्तस्मादाहाऽस्माकोऽसीति 'शुक्रस्ते[3] ग्रह' ऽइति शुक्रᳬ ह्यस्माद् ग्रहं ग्रहीष्यन्भवति 'विचितस्त्वा विचिन्न्वन्त्वि'ति सर्व्वत्वायैतदाह ॥ ७ ॥ अत्र हैके । तृणं वा काष्ठं वा विस्वाऽपास्यन्ति तदु तथा न कुर्य्यात्क्षत्रं वै सोमो विडन्न्या ऽओषधयोऽन्नं वै क्षत्रिस्य विट् स यथा ग्रसितमनुहायाऽऽच्छिद्य परास्येदेवं तत्तस्मादभ्येव मृशेद्विचितस्त्वा विचिन्न्वन्त्विति तद्य ऽएवाऽस्य

* 'ग–च' पुस्तकयोः 'सोमोपनहमा' इत्येव पाठो दृश्यते ।

(१) शु० सं० अ० ४ क०२४ । (२) शु० सं० अ० ४ क० २४ । (३) शु० सं० अ० ४ क० २४ । (४) शु० सं० अ० ४ क० २४ ।

विचेतारस्त ऽएनं विचिन्वन्ति ॥ ८ ॥ अथ वासः । द्विगुणं वा चतुर्गुणं वा प्राग्दशं वोदग्दशं वोपस्तृणाति तद्राजानं मिमीते स यद्राजानं मिमीते तस्मान्मात्रा मनुष्येषु *मात्रो यो चाऽप्यन्या मात्रा ॥ ९ ॥ सावित्र्या मिमीते । सविता वै देवानां प्रसविता तथो हाऽस्मा ऽएष सवितृप्रसूत ऽएव क्रयाय भवति ॥ १० ॥ अतिच्छन्दसा मिमीते । एषा वै सर्वाणि च्छन्दाᳪसि यदतिच्छन्दास्तथो हाऽस्यैष सर्वैरेव छन्दोभिर्म्मितो भवति तस्मादतिच्छन्दसा मिमीते ॥ ११ ॥ स मिमीते । 'अभिँत्यन्देवᳪ सवितारमोण्योः कविक्रतुमर्च्चामि सत्यसवᳪ रत्नधामभिप्प्रियं मतिं कविम् । ऊर्द्ध्वा यस्यामतिर्भा ऽअदिद्युतत्सवीमनि हिरण्यपाणिरमिमीत सुक्रतुः कृपा स्वरि'ति ॥ १२ ॥ एतया सर्वाभिः । एतया चतसृभिरेतया तिसृभिरेतया द्वाभ्यामेतयैकयैतयैवैकयैतया द्वाभ्यामेतया तिसृभिरेतया चतसृभिरेतया सर्वाभिः समस्याऽञ्जलिनाऽध्यावपति ॥१३॥ स वा ऽउदाचन्न्याचं मिमीते । स यदुदाचन्न्याचं मिमीतऽइमा ऽएवैतदङ्गुलीर्न्नानाजानाः करोति तस्मादिमा नाना जायन्तेऽथ यत्सह सर्वाभिर्म्मिमीते सᳪश्लिष्टा ऽइव हैवेमा जायेरँस्तस्माद्वा ऽउदाचन्न्याचं मिमीते ॥ १४ ॥ यद्वेवोदाचन्न्याचं मिमीते । इमा ऽएवैतन्नाना वीर्य्याः करोति तस्मादिमा नाना वीर्य्यास्तस्माद्वा ऽउदाचन्न्याचं मिमीते

* 'क' पुस्तके 'पात्रो' इति पाठः ।

(१) शु० सं० अ० ४ कं० २५ ।

॥ १५ ॥ यद्वेवोदाचन्न्याचं मिमीते । विराजमेवैतदर्वाचीं च पराचीञ्च युनक्ति पराच्च्यह देवेब्भ्यो यज्ञं वहत्त्यर्वाची मनुष्यानवति तस्माद्वा ऽउदाचन्न्याचं मिमीते ॥ १६ ॥ अथ यद्दशकृत्त्वो मिमीते । दशाक्षरा वै विराड् वैराजः सोमस्तस्माद्दशकृत्त्वो मिमीते ॥ १७ ॥ अथ सोमोपनहनस्य समुत्पाट्यॉऽन्तान् । उष्णीषेण विग्रथ्नाति 'प्प्रजाब्भ्यस्त्वे'ति प्प्रजाब्भ्यो ह्येनं क्रीणाति स यद्वेवेदꣳ शिरश्चाऽथ्सौ चाऽन्तरोपेनितमिव तदेवाऽस्यैतत्करोति ॥ १८ ॥ अथ मद्ध्येऽङ्गुल्याकाशं करोति । 'प्प्रजास्त्वाऽनुप्प्राणन्त्वि'ति तमयतीव वा ऽएनमेतत्समाथ्च्छन्नप्प्राणमिव करोति तस्यैतदुत ऽएव मद्ध्यतः प्प्राणमुत्सृजति तं ततः प्प्राणन्तं प्रजाऽअनुप्प्राणन्ति तस्मादाह प्प्रजास्त्वाऽनुप्प्राणन्त्विति तꣳ सोमविक्रयिणे प्प्रयच्छत्यथाऽतः पणनस्यैव ॥ १९ ॥

तृतीयाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥



स वै राजानं पणते । स यद्राजानं पणते तस्मादिदꣳ सर्व्वं पण्यꣳ स ऽआह सोमविक्रयिन् क्रय्यस्ते सोमो राजा३ ऽइति क्रय्य ऽइत्त्याह सोमविक्रयी तं वै ते क्रीणानीति क्रीणीहीत्त्याह सोमविक्रयी कलया ते क्रीणानीति भूयो वा ऽअतः सोमो राजाऽर्हतीत्त्याह सोमविक्रयी भूयऽएवाऽतः सोमो राजाऽर्हति महाँस्त्वेव गोर्म्महिमेत्त्यद्ध्वर्य्युः ॥१॥

(१) शु० सं० अ० ४ क० २५। (२) शु० सं० अ० ४ क० २५।

गोर्व्वै प्प्रातिधुक् । तस्यै शृतं तस्यै शरस्तस्यै दधि तस्यै मस्तु तस्या ऽआतञ्चनं तस्यै नवनीतं तस्यै घृतं तस्या ऽआमिक्षा तस्यै व्वाजिनम् ॥ २ ॥ शफेन ते क्रीणानीति । भूयो वा ऽअतः सोमो राजाऽर्हतीत्याह सोमसोमविक्रयी भूय ऽएवाऽतः सोमो राजाऽर्हति महाँस्त्वेव गोर्म्महिमेत्यद्ध्वर्युरेतान्येव दश व्वीर्य्याण्युदाख्यायाऽऽह पदा तेऽर्द्धेन ते गवा ते क्रीणामीति क्रीतः सोमो राजेत्याह सोमविक्रयी व्वयाꣳसि प्प्रब्रूहीति ॥ ३ ॥ स आह । चन्द्रं ते वस्त्रं ते छागा ते धेनुस्ते मिथुनौ ते गावौ तिस्रस्तेऽन्न्या ऽइति स यदर्वाक्पणन्ते परः सम्पादयन्ति तस्मादिदꣳ सकृत्सर्वं पण्यमर्वाक्पणन्ते परः सम्पादयन्त्यथ यदद्ध्वर्युरेव गोर्व्वीर्य्याण्युदाचष्टे न सोमस्य सोमविक्रयी महितो वै सोमो देवो हि सोमोऽथैतदद्ध्वर्युर्ग्गां महयति तस्यै पञ्चद्व्वीर्य्याणि क्रीणादिति तस्मादद्ध्वर्युरेव गोर्व्वीर्य्याण्युदाचष्टे न सोमस्य सोमविक्रयी ॥ ४ ॥ अथ यत्पञ्च कृत्वः पणते । संव्वत्सरसम्मितो वै यज्ञः पञ्च वा ऽऋतवः संव्वत्सरस्य तं पञ्चभिराप्नोति तस्मात्पञ्च कृत्वः पणते ॥ ५ ॥ अथ हिरण्यं व्वाचयति । 'शुक्रं[1] त्वा शुक्रेण क्रीणामी'ति शुक्रꣳ ह्येतच्छुक्रेण क्रीणाति यत्सोमꣳ हिरण्येन 'चन्द्रं[2] चन्द्रेणे'ति चन्द्रꣳ ह्येतच्चन्द्रेण क्रीणाति यत्सोमꣳ हिरण्येना'ऽमृतममृतेने'[3]त्यमृतꣳ ह्येतदमृतेन क्री-

(१) शु० सं० अ० ४ क० २६ । (२) शु० सं० अ० ४ क० २६। (३) शु० सं० अ० ४ क० २६ ।

णाति यत्सोमꣳ हिरण्येन ॥ ६ ॥ अथ सोमविक्रयिणमभि प्प्रकम्पयति । 'सम्मे ते गोरि'ति यजमाने ते गौरित्त्येवैतदाह तद्यजमानमभ्याहृत्त्य न्न्यस्य'त्त्यस्मे ते चन्द्राणी'ति स ऽआत्मन्न्येव व्वीर्य्यं धत्ते शरीरमेव सोमविक्रयी हरते तत्ततꣳ सोमविक्रय्यादत्ते ॥ ७ ॥ अथाऽजायां प्रतीचीनमुख्यां व्वाचयति । 'तपसस्तनूरसी'ति तपसो ह वा ऽएषा प्प्रजापतेꣳ सम्भूता यदजा तस्मादाह तपसस्तनूरसीति 'प्प्रजापतेर्व्वर्ण्ण' ऽइति सा यत्त्रिꣳ संव्वत्सरस्य व्विजायते तेन प्प्रजापतेर्व्वर्ण्णꣳ 'परमेण पशुना क्रीयस' ऽइति सा यत्त्रिꣳ संव्वत्सरस्य व्विजायते तेन परमꣳ पशुꣳ 'सहस्रपोषं पुषेयमि'त्त्याशिषमेवैतदाशास्ते भूमा वै सहस्रं भूमानं गच्छानीत्त्येवैतदाह ॥ ८ ॥ स वा ऽअनेनैवाऽजां प्रयच्छति । अनेन राजानमादत्त ऽआजा ह वै नामैषा यदजैतया ह्येनमन्तत ऽआजति तामेतत्परोऽक्षमजेत्त्याचक्षते ॥ ९ ॥ अथ राजानमादत्ते । 'मित्त्रो नँ ऽएहि सुमित्त्रध' ऽइति शिवो नꣳ शान्त ऽएहीत्त्येवैतदाह तं यजमानस्य दक्षिण ऽऊरौ प्प्रत्त्युह्य व्वासो निदधा'तीन्न्द्रस्योरुमाविश दक्षिणमि'त्त्येष वा ऽअत्रेन्द्रो भवति यद्यजमानस्तस्मादाहेन्द्रस्योरुमाविश दक्षिणमि'त्त्युशन्नुशन्तमि'ति प्प्रियꣳ प्प्रियमित्त्येवैतदाह 'स्योनꣳ स्योनमि'ति शिवꣳ शिवमित्त्येवैतदाह ॥ १० ॥ अथ सोम-

(१) शु० सं० अ० ४ क० २६ । ( २ ) शु० सं० अ० ४ क० २६ । ( ३ ) शु० सं० अ० ४ क० २६ । ( ४ ) शु० सं० अ० ४ क० २६ । ( ५ ) शु० सं० अ० ४ क० २६ । ( ६ ) शु० सं० अ० ४ क० २६ । ( ७ ) शु० सं० अ० ४ क० २७ । ( ८ ) शु० सं० अ० ४ क० २७ (९) शु० सं० अ० ३६ क० २७ । (१०) शु० सं० अ० ४ क० २७ ।

क्रयणाननुदिशति। 'स्वानं भ्राजाऽङ्घारे बम्भारे हस्त सुहस्त कृशानवेते वः सोमक्रयणास्तान्रक्षध्वं मा वो दभन्नि'ति धिष्ण्यानां वा ऽएते भाजनेनैतानि वै *धिष्ण्यानां नामानि तान्येवैभ्य ऽएतदन्वदिक्षत् ॥ ११ ॥ अथाऽत्राऽपोर्णुते। गर्भो वा ऽएष भवति यो दीक्षते प्रावृता वै गर्भाऽउल्बेनेव जरायुणेव तमत्राऽजीजनत तस्मादुपोर्णुत ऽएष वा ऽअत्र गर्भो भवति तस्मात्परिवृतो भवति परिवृताऽइव हि गर्भा ऽउल्बेनेव जरायुणेव ॥ १२ ॥ अथ वाचयति। 'परि माऽग्ने दुश्चरिताद्बाधस्वा मा सुचरिते भजे'-त्यासीनं वा ऽएनमेष ऽआगच्छति स ऽआगत ऽउत्तिष्ठति तन्मिथ्याकरोति व्रतं प्रमीणाति तस्यो हैषा प्रायश्चित्तिस्तथो हाऽस्यैतन्न मिथ्याकृतं भवति न व्रतं प्रमीणाति तस्मादाह परिमाऽग्ने दुश्चरिताद् बाधस्वा मा सुचरिते भजेति ॥ १३ ॥ अथ राजानमादायोत्तिष्ठति 'उदायुषा स्वायुषोदस्थाममृताँ२ ऽअन्वि'त्यमृतं वा ऽएषोऽनूत्तिष्ठति यः सोमं क्रीतं तस्मादाहोदायुषा स्वायुषोदस्थाममृताँ२ ऽअन्विति ॥ १४ ॥ अथ राजानमादायाऽऽरोहणमभिप्रैति। 'प्रेति पन्थामपद्महि स्वस्ति गामनेहसम्। येन विश्वाः परि द्विषो वृणक्ति विन्दते वस्वि'ति ॥ १५ ॥ देवा ह वै यज्ञं तन्वानाः। तेऽसुररक्षसेभ्य ऽआसङ्गाद्बिभया-

* धिष्ण्यः स्थण्डिलविशेषो यत्राऽग्निं संस्थाप्य होत्रादयः स्वानि स्वानि शस्त्राणि शंसन्ति। तथा च—"अग्नीनामाश्रय भूता मृदा निर्मिताः सप्त स्वल्पवेदिका धिष्ण्यान्युच्यन्ते"।

(१) शु० सं० अ० ४ क० २७। (२) शु० सं० अ० ४ क० २८। (३) शु० सं० अ० ४ क० २८। (४) शु० सं० अ० ४ क० २९।

ञ्चक्रुस्त ऽएतद्यजुः स्वस्त्ययनं ददृशुस्त ऽएतेन यजुषा नाष्ट्रा रक्षाᳬस्यपहत्यैतस्य यजुषोऽभयेऽनाष्ट्रे निवाते स्वस्ति समाश्नुवत तथो ऽएवैष ऽएतेन यजुषा नाष्ट्रा रक्षाᳬस्यपहत्यै तस्य यजुषोऽभयेऽनाष्ट्रे निवाते स्वस्ति समश्नुते तस्मादाह प्प्राति पन्थामपद्महि स्वस्ति गामनेहसम् । येन विश्वाः परिद्विषो व्वृणक्ति विन्दते वस्विति ॥ १६ ॥ तं वा ऽइति हरन्ति । अनसा परिवहन्ति महयन्त्येवैनमेतत्तस्माच्छीर्ष्णा बीजᳬ हरन्त्यनसोद्वावहन्ति ॥ १७ ॥ अथ यदपामन्ते क्रीणाति । रसो वा ऽआपः सरसमेवैतत्क्रीणात्यथ यद्धिरण्यं भवति सशुक्रमेवैतत्क्रीणात्यथ यद्वासो भवति सत्वचसमेवैतत्क्रीणात्यथ यदजा भवति सतपसमेवैतत्क्रीणात्यथ यद्धेनुर्भवति साऽशिरमेवैतत्क्रीणात्यथ यन्मिथुनौ भवतः समिथुनमेवैतत्क्रीणाति तं वै दशभिरेव क्रीणीयान्नाऽदशभिर्दशाक्षरा वै विराड्वैराजः सोमस्तस्माद्दशभिरेव क्रीणीयान्नाऽदशभिः ॥ १८ ॥

तृतीयाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

माध्यन्दिनीये शतपथब्राह्मणे द्वितीयः प्रपाठकः ॥ २ ॥
कण्डिकासंख्या ॥१२८॥



*नीडे कृष्णाजिनमास्तृणाति । 'अदित्यास्त्वगसी'ति सोऽसावेव बन्धुरथैनमासादय'त्यदित्यै सद ऽआसीदे'तीयं

* परितः प्रावृतः शकटमध्यदेशो नीडम्, तत्र कृष्णाजिनमास्तृणाति प्रसारयेदित्यर्थः ।
(१) शु० सं० अ० ४ क० ३० । (२) शु० सं० अ० ४ क० ३० ।

वै पृथिव्यदितिः सेयं प्रतिष्ठा तदस्यामेवैनमेतत्प्रतिष्ठायां प्रतिष्ठापयति तस्मादाहाऽदित्यै सद ऽआसीदेति ॥ १ ॥ अथैवमभिपद्य वाचयति । 'अस्तभ्नाद् द्यां वृषभो ऽअन्तरिक्षमि'ति देवा ह वै यज्ञं तन्वानास्तेऽसुररक्षसेभ्य ऽआसङ्गाद्बिभयाञ्चक्रुस्त ऽएनमेतज्ज्यायाᳫंसमेव वधाच्चक्रुर्यदाहाऽस्तभ्नाद् द्यां वृषभो ऽअन्तरिक्षमिति ॥२॥ 'अमिमीत वरिमाणं पृथिव्या' ऽइति । तदेनेनेमाँल्लोकानास्पृणोति तस्य हि न हन्ताऽस्ति न वधो येनेमे लोका ऽआस्पृतास्तस्मादाहाऽमिमीत वरिमाणं पृथिव्या ऽइति ॥३॥ 'आसीदद्विश्वा भुवनानि सम्राडि'ति । तदेनेनेदᳫं सर्वमास्पृणोति तस्य हि न हन्ताऽस्ति न वधो येनेदᳫं सर्वमास्पृतं तस्मादाहाऽऽसीदद्विश्वा भुवनानि सम्राडिति ॥ ४ ॥ 'विश्वेत्तानि वरुणस्य व्रतानी'ति । तदस्मा ऽइदᳫं सर्वमनुवर्त्म करोति यदिदं किञ्च न कश्चन प्रत्युद्यामिनं तस्मादाह विश्वेत्तानि वरुणस्य व्रतानीति ॥ ५ ॥ अथ सोमपर्याणहनेन पर्याणह्यति । नेदेनं नाष्ट्रा रक्षाᳫंसि प्रमृशानिति गर्भो वा ऽएष भवति तिर ऽइव वै गर्भास्तिर ऽइवैतद्यत्पर्याणद्धं तिर ऽइव वै देवा मनुष्येभ्यस्तिर ऽइवैतद्यत्पर्याणद्धं तस्माद्वै पर्याणह्यति ॥ ६ ॥ स पर्याणह्यति । 'वनेषु व्यन्तरिक्षं ततान'ति वनेषु हीदमन्तरिक्षं विततं वृक्षाग्रेषु 'वाजमर्वत्सु पय ऽउस्रियास्वि'ति वीर्यं वै वाजाः

(१) शु० सं० अ० ४ क० ३०। (२) शु० सं० अ० ४ क० ३०। (३) शु० सं० अ० ४ क० ३०। (४) शु० सं० अ० ४ क० ३०। (५) शु० सं० अ० ४ क० ३१। (६) शु० सं० अ० ४ क० ३१।

पुमाꣳसोऽर्वन्तः पुꣳस्त्वेवैतद्वीर्यं दधाति पय ऽउस्रियास्विति पयो हीदमुस्रियासु हितꣳ [1]'हृत्सु क्रतुं वरुणो विक्ष्वग्निमि'ति हृत्सु ह्ययं क्रतुर्म्मनोजवः प्रविष्टो विक्ष्वग्निमिति विक्षु ह्ययं प्रजास्वग्नि'र्न्दिवि [2]सूर्य्यमदधात्सोममद्रावि'ति दिवि ह्यसौ सूर्य्यो हितः सोममद्राविति गिरिषु हि सोमस्तस्मादाह दिवि सूर्य्यमदधात्सोममद्राविति ॥ ७ ॥ अथ यदि द्वे कृष्णाजिने भवतः । तयोरन्न्यतरत्प्रत्यानह्यति *प्रतीनाहभाजनं यद्यु ऽएकं भवति कृष्णाजिनग्रीवा ऽएवाऽवकृत्य प्रत्यानह्यति प्रतीनाहभाजनꣳ '[3]सूर्य्यस्य चक्षुरारोहाऽग्नेरक्ष्णः कनीनकम् । यत्रैतशेभिरीयसे भ्राजमानो विपश्चिते'ति सूर्य्यमेवैतत्पुरस्तात्करोति सूर्य्यः पुरस्तान्नाष्ट्रा रक्षाꣳस्यपघ्नन्नेत्यथाऽभयेनाऽनाष्ट्रेण परिवहन्ति ॥८॥ उद्धते प्र ऽउग्ये फलके भवतः । तदन्तरेण तिष्ठन्त्सुब्रह्मण्यः प्राऽऽजति श्रेयान्न्वा ऽएषोऽभ्यारोहाद्भवति को ह्येतमर्हत्यभ्यारोढुं तस्मादन्तरेण तिष्ठन्प्राऽऽजति ॥ ९ ॥ पलाशशाखया प्राऽऽजति। यत्र वै गायत्री सोममच्छाऽपतत्तदस्याऽआहरन्त्या ऽअपादस्ताभ्यायत्य पर्ण्णं प्रचिच्छेद गायत्र्यै वा सोमस्य वा राज्ञस्तत्पतित्त्वा पर्ण्णोऽभवत्तस्मात्पर्ण्णो नाम तद्यदेवाऽत्र सोमस्य न्न्यक्तं तदिहाऽप्यसदिति तस्मात्पलाशशाखया प्राऽऽजति ॥ १० ॥ अथाऽनड्वाहावाजन्ति । तौ

( १ ) शु० सं० अ० ४ क० ३१। ( २ ) शु० सं० अ० ४ क० ३१। ( ३ ) शु० सं० अ० ४ क० ३२।

* नद्धस्य पुरोदेशप्रसारितो ध्वजः प्रतिनाहः, तद्भाजनन्तत्स्थानीयं भवतीत्यर्थः (सा० भा०)। अत्राऽनसो वाससा वेष्टनमिति देवयाज्ञिकः।

यदि कृष्णौ स्यातामन्न्यतरो वा कृष्णस्तत्र विद्याद्वर्षिष्यत्यैषमꣳ पर्ज्जन्न्यो ऽवृष्टिमान्न्भविष्यतीत्त्येतदु विज्ञानम् ॥ ११ ॥ अथ युनक्ति । '[1]उस्रावेतं धूर्षाहावि'त्त्युस्रौ हि भवतो धूर्षाहाविति धूर्वाहौ हि भवतो '[2]युज्येथामनश्रू ऽइति युज्येते ह्यनश्रू ऽइत्त्यनार्त्ताविति त'[3]द्वीरहणावि'त्त्यपापकृताविति तद् '[4]ब्रह्मचोदनावि'ति ब्रह्मचोदनौ हि भवतꣳ '[5]स्वस्ति यजमानस्य गृहान्न्गच्छत'मिति यथैनावन्तरा नाष्ट्रा रक्षाꣳसि न हिꣳस्युरेवमेतदाह ॥ १२ ॥ अथ पश्चात्परिक्रम्य । अपालम्बमभिपद्याऽऽह सोमाय क्रीतायाऽनुब्रूहीति सोमाय पर्युह्यमाणायेति वातो यतरथा कामयेत ॥ १३ ॥ अथ वाचयति । 'भद्रो मेऽसि[6] प्रच्च्यवस्व भुवस्पत' ऽइति भद्रो ह्यस्यैष भवति तस्मान्नाऽन्यमाद्रियतेऽप्प्यस्य राजानꣳ सभागा ऽआगच्छन्ति पूर्वो राज्ञोऽभिवदति भद्रो हि भवति तस्मादाह भद्रो मेऽसीति प्रच्च्यवस्व भुवस्पत ऽइति भुवनानाꣳ ह्येष पति'[7]र्विश्वान्न्यभि धामानी'त्त्यङ्गानि वै विश्वानि धामान्न्यङ्गान्न्येवैतदभ्याह '[8]मा त्वा परिपरिणो विदन्न्मा त्वा परिपन्थिनो विदन्न्मा त्वा वृका ऽअघायवो विदन्नि'ति यथैनमन्तरा नाष्ट्रा रक्षाꣳसि न विन्देयुरेवमेतदाह ॥ १४ ॥ '[9]श्येनो भूत्वा परापते'ति । वय-

(१) शु० सं० अ० ४ क० ३३। (२) शु० सं० अ० ४ क० ३३। (३) शु० सं० अ० ४ क० ३३। (४) शु० सं० अ० ४ क० ३३। (५) शु० सं० अ० ४ क० ३३। (६) शु० सं० अ० ४ क० ३४। (७) शु० सं० अ० ४ क० ३४। (८) शु० सं० क० ४ क० ३४। (९) शु० सं० अ० ४ क० ३४।

ऽएवैनमेतद्भूतं प्रपायति यद्वा ऽउग्रं तन्नाष्ट्रा रक्षाᳯसि नाऽन्ववयन्त्येतद्वै व्वयसामोजिष्ठं बलिष्ठं यच्छ्येनस्तमेवै- तद्भूतं प्रपातयति यदाह श्येनो भूत्वा परापतेति ॥ १५ ॥ अथ शरीरमेवा*ऽन्ववहन्ति। 'यजमानस्य गृहान्गच्छ तन्नौ सᳯस्कृतमि'ति नाऽत्र तिरोहितमिवाऽस्ति ॥ १६ ॥ अथ †सुब्रह्मण्ण्यामाह्वयति । यथा येभ्यः पक्ष्यन्त्स्यात्तान्ब्रूयादि- त्यहे वः पक्ताऽस्मीत्त्येवमेवैतद्देवेभ्यो यज्ञं निवेदयति 'सुब्रह्मण्ण्यो३म् सुब्रह्मण्ण्यो३मि'ति ब्रह्म हि देवान्प्रच्च्या- वयति त्रिष्कृत्व ऽआह त्रिवृद्धि यज्ञः ॥ १७ ॥ 'इन्द्राऽऽ- गच्छे'ति । इन्द्रो वै यज्ञस्य देवता तस्मादाहेन्द्राऽऽगच्छेति 'हरिवँ ऽआगच्छ मेधातिथिर्म्मेष व्वृषणश्वस्य मेने । गौरा- वस्कन्दिन्नहल्यायै जारे'ति तद्यान्न्येवाऽस्य चरणानि तैरे- वैनमेतत्प्रमुमोदयिषति ॥ १८ ॥ 'कौशिकँ ब्राह्मण गौतम ब्रुवाणे'ति । शश्वद्धैतदारुणिनाऽधुनोपज्ञातं यद्गौतम ब्रुवा- णेति स यदि कामयेत ब्रूयादेतद्यद्यु कामयेताऽपि नाऽऽद्रि- येते'त्यहे सुत्यामि'ति यावदहे सुत्या भवति ॥ १९ ॥ 'देवा ब्रह्माण ऽआगच्छते'ति । तद्देवाँश्च ब्राह्मणाँश्चाऽहैतैर्ह्युत्रो- भयैरर्त्थो भवति यद्देवैश्च ब्राह्मणैश्च ॥ २० ॥ अथ प्प्रातिप्प्र- स्त्थाता । अग्रेण शालामग्नीषोमीयेण पशुना प्प्रत्युपतिष्ठते-

---

* 'क' पुस्तके 'ऽन्वावहन्ति' इति ।

† सुब्रह्मण्यानामकेन ऋत्विजा यदिन्द्राद्यावाहनं क्रियते तत् सुब्रह्मण्याह्वानम् ।

(१) शु० सं० अ० ४ क० ३६। (२) षड्विं० ब्रा० १. १. ३। (३) षड्विं० ब्रा० १. १. २। (४) षड्विं० ब्रा० १. १. २। (५) षड्विं० ब्रा० १. १. २। (६) ला० श्रौ० सू० १. ३। (७) ला० श्रौ० सू० १. ३।

ऽआग्नावैष्णवꣳ ह्यदो दीक्षणीयꣳ हविर्ब्भवति यो वै विष्णुः सोमः स हविर्व्वा ऽएष देवानां भवति यो दीक्षते तदेनमन्तर्ज्जम्भ ऽआदधाते तत्पशुनाऽऽत्मानं निष्क्रीणीते ॥२१॥ तद्धैके । आहवनीयादुल्मुकमाहरन्त्ययमग्निरयꣳ सोमस्ताऽभ्याꣳ सह सन्धयां निष्क्रेष्यामह ऽइति वदन्तस्तदु तथा न कुर्य्याद्यत्र वा ऽएतौ क्व च तत्सहैव ॥ २२ ॥ स वै द्विरूपो भवति । द्विदेवत्यो हि भवति देवतयोरसमदे कृष्णसारङ्गः स्यादित्याहुरेतद्ध्येनयो रूपतमामिवेति यदि कृष्णसारङ्गं न विन्देदथो ऽअपि लोहितसारङ्गः स्यात् ॥२३॥ तस्मिन्न्वाचयति । 'नमो मित्रस्य वरुणस्य चक्षसे महो देवाय तदृतꣳ सपर्य्यत । दूरे दृशे देवजाताय केतवे दिवस्पुत्राय सूर्य्याय शꣳसते'ति नम ऽएवाऽस्मा ऽएतत्करोति मित्रधेयमेवैनेनैतत्कुरुते ॥ २४ ॥ अथाऽक्षधुरुर्धुरारोहणं विमुञ्चति । '[2]वरुणस्योत्तम्भनमसी'त्युपस्तम्भनेनोपस्तभ्नाति '[3]वरुणस्य स्कम्भसर्ज्जनी स्त्थ' ऽइति शम्म्ये ऽउद्वृहति स यदाह वरुणस्य स्कम्भसर्ज्जनी स्त्थ ऽइति वरुण्यो ह्येष ऽएतर्हि भवति यत्सोमः क्रीतः ॥ २५ ॥ अथ चत्त्वारो राजाऽऽसन्दीमाददते । द्वौ वा ऽअस्मै मानुषाय राज्ञ ऽआददाते ऽअथैतां चत्त्वारो योऽस्य सर्व्वस्येष्टे ॥२६॥ औदुम्बरी भवति । अन्नं वा ऊर्ग्गुदुम्बर ऽऊर्ज्जोऽन्नाद्यस्याऽवरुद्ध्यै तस्मादौदुम्बरी भवति ॥२७॥ नाभिदघ्ना भवति । अत्र

(१) शु० सं० अ० ४ क० ३५ । (२) शु० सं० अ० ४ क० ३६ । (३) शु० सं० अ० ४ क० ३६ ।

वा ऽअन्नं प्रतितिष्ठत्यन्नꣳ सोमस्तस्मान्नाभिदघ्ना भवत्यत्रो ऽएव रेतस ऽआशयो रेतꣳ सोमस्तस्मादत्रदघ्ना भवति ॥ २८ ॥ तामभिमृशति । 'वरुणस्य ऽऋतसदन्यसी'त्यथ कृष्णाजिनमास्तृणाति 'वरुणस्य ऽऋतसदनमसी'त्यथैनमासादयति 'वरुणस्य ऽऋतसदनमासीदे'ति स यदाह वरुणस्य ऽऋतसदनमासीदेति वरुण्यो ह्येष ऽएतर्हि भवति ॥ २९ ॥ अथैनꣳ शालां प्रपादयति । स प्रपादयन्नवाचयति 'या ते धामानि हविषा यजन्ति ता ते विश्वा परिभूरस्तु यज्ञम् । गयस्फानꣳ प्रतरणꣳ सुवीरोऽवीरहा प्रचरा सोम दुर्य्यानि'ति गृहा वै दुर्य्या गृहान्नꣳ शिवꣳ शान्तोऽपापकृत्प्रचरेत्येवैतदाह ॥ ३० ॥ अत्र हैके । उदपात्रमुपनिनयन्ति यथा राज्ञ ऽआगतायोदकमाहरेदेवमेतदिति वदन्तस्तदु तथा न कुर्य्यान्मानुषꣳ ह ते यज्ञे कुर्वन्ति व्यृद्धं वै तद्यज्ञस्य यन्मानुषं नेद्व्यृद्धं यज्ञे करवाणीति तस्मान्नोपनिनयेत् ॥ ३१ ॥

तृतीयाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

इति तृतीयोऽध्यायः ॥ ३ ॥



शिरो वै यज्ञस्याऽऽतिथ्यं बाहू प्रायणीयोदयनीयौ । अभितो वै शिरो बाहू भवतस्तस्मादभित ऽआतिथ्यमेते हविषी भवतꣳ प्रायणीयश्चोदयनीयश्च ॥१॥ ऽअथ यस्मा-

(१) शु० सं० अ० ४ क० ३६ । (२) शु० सं० अ० ४ क० १९ । (३) शु० सं० अ० ४ क० ३६ ।

*दातिथ्यं नाम । अतिथिर्व्वा ऽएष ऽएतस्याऽऽगच्छति यत्सोमः क्रीतस्तस्मा ऽएतद्यथा राज्ञे वा ब्राह्मणाय वा †महोक्षं वा महाजं वा पचेत्तदह मानुषꣳ हविर्द्देवानामेवमस्मा ऽएतदातिथ्यं करोति ॥ २ ॥ तदाहुः । पूर्वोऽतीत्य गृह्णीयादिति यत्र वा ऽअर्हन्तमागतं नाऽपचायन्ति क्रुद्ध्यति वै स तत्र तथा हाऽपचितो भवति ॥ ३ ॥ तद्वा ऽअन्न्यतरऽएव विमुक्तः स्यात् । अन्न्यतरोऽविमुक्तोऽथ गृह्णीयात्स यदन्न्यतरो विमुक्तस्तेनाऽऽगतो यद्वन्न्यतरोऽविमुक्तस्तेनाऽपचितः ॥ ४ ॥ तदु तथा न कुर्य्यात् । विमुच्च्यैव प्प्रपाद्य गृह्णीयाद्यथा वै देवानां चरणं तद्वा ऽअनु मनुष्याणां तस्मान्न्मानुषे यावन्न विमुञ्चते नैवाऽस्म्मै तावदुदकꣳ हरन्ति नाऽपचितिं कुर्वन्त्यनागतो हि स तावद्भवत्यथ यदैव विमुञ्चतेऽथाऽस्मा ऽउदकꣳ हरन्त्यथाऽपचितिं कुर्वन्ति तर्हि हि स ऽआगतो भवति तस्माद्विमुच्च्यैव प्प्रपाद्य गृह्णीयात् ॥ ५ ॥ स वै सन्त्वरमाण ऽइव गृह्णीयात् । तथा हाऽपचितो भवति तत्पत्न्न्यन्न्वारभते पर्य्युह्यमाणं वै यजमानोऽन्न्वारभतेऽथाऽत्र पत्न्न्युभयत ऽएवैतन्न्मिथुनेनाऽन्न्वारभेते यत्र वाऽअर्हन्नाऽऽगच्छति सर्व्वगृह्या ऽइव वै तत्र चेष्टन्ति तथा हाऽपचितो भवति ॥ ६ ॥ स वा ऽअन्न्येनैव ततो यजुषा

* 'आतिथ्यं निर्वपति वैष्णवं नवकपालम्' ( का० श्रौ० सू० ८. १. १. ) ।

† "महोक्षं वा महाजं वा श्रोत्रियायोपकल्पयेत् ।
सत्क्रियाऽन्वासनं स्वादु भोजनं सूनृतं वचः" ( या० स्मृ० आचा० श्लो० १०९ ) ।

गृह्णीयात् । य॒नो चाऽन्न्यानि हवीᳬंष्येकं व्वा ऽएष भाग॑ क्रीय॒माणोऽभि॒क्रीयते छन्दसामे॒व राज्ज्या॒य च्छन्दसाᳬं साम्म्राज्ज्याय त॒स्य च्छन्दाᳬंस्यभि॒तः * साचया॒नि य॒था राज्ञो-ऽराजानो राजकृ॒तः सूतग्राम॒ण्य ऽएव॒मस्य च्छन्दाᳬंस्य-भि॒तः साचया॒नि ॥ ७ ॥ न वै तदुवकल्पते । यच्छन्दोऽभ्य-ऽइति केवलं गृह्णीयाद्यत्र वा ऽअर्हते प्र॒चन्ति त॒दभि॒तः साचयोऽन्न्वाभक्ता भवन्त्यराजानो राजकृ॒तः सूतग्राम॒ण्य-स्तस्माद्यत्रैवैतस्यै गृह्णीयात्तदे॒व च्छन्दाᳬंस्यन्न्वाभजेत् ॥८॥ स॒ गृह्णाति । 'अ॒ग्नेस्तनूरसि व्विष्णवे त्वे'त्यग्निर्वै गायत्री त॒द्गायत्रीमन्न्वाभजति ॥ ९ ॥ 'सो॒मस्य तनूरसि व्विष्णवे त्वे'ति । क्षत्त्रं वै सो॒मः क्षत्त्रं त्रिष्टुत्त्रिष्टुभमन्न्वाभजति ॥ १० ॥ 'अ॒तिथेरातिथ्यमसि व्विष्णवे त्वे'ति॒ । सोऽस्यो-द्धारो य॒था श्रेष्ठस्योद्धार॒ ऽएवमस्यैष॒ ऽऋते च्छन्दोऽभ्यः ॥ ११ ॥ 'श्येनाय त्वा सोमभृते व्विष्णवे त्वे'ति॒ । त॒द्गायत्री-मन्न्वाभजति सा य॒द्गायत्री श्येनो॒ भूत्त्वा॒ दिवः सो॒ममाहर-त्तेन सा॒ श्येन॒ः सोमभृत्तेनैवैनामेतद्वीर्य्येण द्वि॒तीयमन्न्वा-भजति ॥ १२ ॥ 'अ॒ग्नये त्वा रायस्पोषदे व्विष्णवे त्वे'ति । पशवो वै॒ रायस्पो॒षः पशवो ज॒गती तज्जगतीमन्न्वाभजति ॥ १३ ॥ अ॒थ यत्पञ्चकृत्त्वो गृह्णाति । संवत्त्सर॒सम्मितो वै॒ य॒ज्ञः पञ्च व्वा ऽऋतवः संवत्त्सर॒स्य तं॒ पञ्चभिराप्नोति

* अभितः साचयानीति, पुरः पश्चाच्च सहैवाऽऽगन्तारः प्रधानपुरुषा इत्यर्थः ।

(१) शु० सं० अ० ५ क० १। (२) शु० सं० अ०५ क० १। (३) शु० सं० अ० ५ क० १। (४) शु० सं० अ० ५ क० १। (५) शु० सं० अ० ५ क० १।

तस्मात्पञ्चकृत्वो गृह्णात्यथ यद्विष्णवे त्वा विष्णवे त्वेति गृह्णाति विष्णवे हि गृह्णाति यो यज्ञाय गृह्णाति ॥ १४ ॥ नवकपालः पुरोडाशो भवति । शिरो वै यज्ञस्याऽऽतिथ्यं नवाक्षरा वै गायत्र्यष्टौ तानि यान्यन्वाह प्रणवो नवमः पूर्वार्द्धो वै यज्ञस्य गायत्री पूर्वार्द्ध ऽएष यज्ञस्य तस्मान्नवकपालः पुरोडाशो भवति ॥१५॥* कार्ष्मर्य्यमयाः परिधयः । देवा ह वा ऽएतं वनस्पतिषु राक्षोघ्नं ददृशुर्य्यत्कार्ष्मर्य्यं शिरो वै यज्ञस्याऽऽतिथ्यं नेच्छिरो यज्ञस्य नाष्ट्रा रक्षाᳬसि हिनसन्निति तस्मात्कार्ष्मर्य्यमयाः परिधयो भवन्ति ॥१६॥ †आश्वबालः प्रस्तरः । यज्ञो ह देवेभ्योऽपचक्राम सोऽश्वो भूत्वा पराङावर्वर्त्त तस्य देवा ऽअनुहाय वालानभिपेदुस्तानालुलुपुस्तानालुप्य सार्द्धᳬ सन्न्यासुस्तत ऽएता ऽओषधयः समभवन्न्यदश्वबालाः शिरो वै यज्ञस्याऽऽतिथ्यं जघनार्द्धो वाला ऽउभयत ऽएवैतद्यज्ञं परिगृह्णाति यदाश्वबालः प्रस्तरो भवति ॥ १७ ॥ ‡ऐक्षव्यौ विधृती । ‡‡नेद्बर्हिश्च प्रस्तरश्च संलुभ्याऽत ऽइत्यथोत्पूयाऽऽज्यᳬ सर्वाण्येव चतुर्गृहीतान्न्याज्यानि गृह्णाति न ह्यत्राऽनुयाजा भवन्ति ॥१८॥ $आसाद्य हवीᳬष्यग्निं मन्थति । शिरो वै यज्ञस्याऽऽतिथ्यं जनयन्ति वा ऽएनमेतद्यन्मन्थन्ति शीर्षतो वा ऽअग्रे

---

* 'कार्ष्मर्यमयाः परिधयः' ( का० श्रौ० सू० ८. १. १० ) ।

† 'आश्वबालः प्रस्तरः' ( का० श्रौ० सू० ८. १. १० ) ।

‡ 'ऐक्षव्यौ विधृती बर्हिश्च' ( का० श्रौ० सू० ८. १. १० ) ।

‡‡ सर्वोऽप्यनुवाकः ( तै० सं० ६. २. १. ) अत्र द्रष्टव्यः ।

$ 'आसाद्याऽग्निमन्थनमाहोमात्करोति' ( का० श्रौ० सू० ८. १. १२ ) ।

जायमानो जायते शीर्षत ऽएवैतदग्रे यज्ञं जनयत्यग्निर्वै सर्वा देवता ऽअग्नौ हि सर्वाभ्यो देवताभ्यो जुह्वति शिरो वै यज्ञस्याऽऽतिथ्यꣳ शीर्षत ऽएवैतद्यज्ञꣳ सर्वाभिर्देवताभिꣳ समर्द्धयति तस्मादग्निं मन्थति ॥ १९ ॥ सोऽधिमन्थनꣳ शकलमादत्ते । '[1]अग्नेर्जनित्रमसी'त्यत्र ह्यग्निर्जायते तस्मादाहाऽग्नेर्जनित्रमसीति ॥ २० ॥ अथ दर्भतरुणके निदधाति । '[2]वृषणौ स्थ' ऽइति तद्यावेवेमौ * स्त्रियै साकञ्जावेतावेवैतौ ॥ २१ ॥ अथाऽधरारणिं निदधाति '[3]उर्वश्यसी'त्यथोत्तरारण्याज्यविलापनीमुपस्पृश'त्यायुरसी'ति तामभिनिधाति '[4]पुरूरवा ऽअसी'त्युर्वशी वा ऽअप्सराꣳ पुरूरवाꣳ पतिरथ यत्तस्मान्मिथुनादजायत तदायुरेवमेवैष ऽएतस्मान्मिथुनाद्यज्ञं जनयत्यथाऽऽहाऽग्नये मथ्यमानायाऽनु ब्रूहीति ॥ २२ ॥ स मन्थति । '[5]गायत्रेण त्वा छन्दसा मन्थामि त्रैष्टुभेन त्वा च्छन्दसा मन्थामि जागतेन त्वा च्छन्दसा मन्थामीति' तं वै छन्दोभिरेव मन्थति च्छन्दाꣳसि मथ्यमानाया ऽन्वाह च्छन्दाꣳस्येवैतद्यज्ञमन्वायातयति यथाऽमुमादित्यꣳ रश्मयो जातायाऽनुब्रूहीत्याह यदा जायते प्प्राह्रियमाणायेत्यनुप्प्रहरन् ॥ २३ ॥ सोऽनुप्प्रहरति । '[6]भवतं नꣳ समनसौ सचेतसावरेपसौ । मा यज्ञꣳ हिꣳसिष्टं मा यज्ञपतिं

---

* स्त्रियै साकञ्जाविति, स्त्रियै—स्त्रियाः सकाशात्—साकञ्जौ सहजायमनावित्यर्थः ।

(१) शु० सं० अ० ५ क० २ । (२) शु० सं० अ० ५ क० २ । (३) शु० सं० अ० ५ क० २ । (४) शु० सं० अ० ५ क० । (५) शु० सं० अ० ५ क० २ । (६) शु० सं० अ० ५ क० ३ । (७) शु० सं० अ० ५ क० ३ ।

जातवेदसौ शिवौ भवतमद्यन' ऽइति शान्तिमेवाऽऽभ्यामेतद्व-दति यथा नाऽन्योऽन्यᳬ हिᳬस्याताम् ॥ २४ ॥ अथ स्रुवेणोपहत्याऽऽज्यम् । अग्निमभिजुहोत्यग्नावग्निश्चरति प्प्र-विष्ट ऽऋषीणां पुत्रो ऽअभिशस्तिपावा । स नः स्योनः सुयजा यजेह देवेभ्यो हव्यᳬ सदमप्प्रयुच्छन्त्स्वाहे'त्याहुत्यैवा-ऽएतमजीजनत तमेतयाऽऽहुत्याऽप्प्रैषीत्तस्मादेवमभिजुहोति ॥ २५ ॥ तदिडान्तं भवति । नाऽनुयाजान्यजन्ति शिरो वै यज्ञस्याऽऽतित्थ्यं पूर्वार्द्धो वै शिरः पूर्वार्द्धमेवैतद्यज्ञस्या-ऽभि*सᳬस्करोति स यद्धाऽनुयाजान्यजेद्यथा शीर्षतः परुर्षा-हृत्य पादौ प्प्रतिदध्यादेवं तत्तस्मादिडान्तं भवति नाऽनुया-जान्यजन्ति ॥ २६ ॥

चतुर्थाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



आतित्थ्येन वै देवा ऽइष्ट्वा । तान्त्समदविन्दत्ते चतुर्द्धा व्यद्रवन्नन्योऽन्यस्य श्रिया ऽअतिष्ठमाना ऽअग्निर्वसुभिः सोमो रुद्रैर्वरुण ऽआदित्यैरिन्द्रो मरुद्भिर्बृहस्पतिर्विश्वैर्दे-वैरित्यु हैक ऽआहुरेते ह त्वेव ते विश्वे देवा ये ते चतुर्द्धा व्यद्रवँस्तान्विद्रुतानसुररक्षसान्यनु व्यवेयुः ॥ १ ॥ ते-ऽविदुः । पापीयाᳬसो वै भवामोऽसुररक्षसानि वै नोऽनुव्य-वागुर्द्विषद्भ्यो वै रद्ध्यामो हन्त सञ्जानामहा ऽएकस्य श्रियै

* 'संस्करोति' इति 'क' पुस्तके ।

( १ ) शु० सं० अ० ५ क० ३ । ( २ ) का० श्रौ० सू० ८. १. १३ । ( ३ ) शु० सं० अ० ५ क० ४ ।

तिष्ठामहा ऽइति त ऽइन्द्रस्य श्रिया ऽअतिष्ठन्त तस्मादाहु-रिन्द्रः सर्वा देवता ऽइन्द्रश्रेष्ठा देवा ऽइति ॥ २ ॥ तस्मादु ह न स्वा ऽऋतीयेरन् । य ऽएषां परस्तरामिव भवति स ऽएनाननु व्यवैति ते प्प्रियं द्विषतां कुर्वन्ति द्विषद्भ्यो रध्यन्ति तस्मान्नर्तीयेरन्त्स यो हैवं विद्वान्नर्त्ती-यतेऽप्प्रियं द्विषतां करोति न द्विषद्भ्यो रध्यति तस्मान्नर्त्ती-येत ॥ ३ ॥ ते होचुः । हन्तेदं तथा करवामहै यथा न ऽइदमा प्प्रादिवमेवा*ऽजर्य्यमसदिति ॥ ४ ॥† ॥ ते देवाः । जुष्टास्तनूः प्प्रियाणि धामानि सार्द्धं समवददिरे ते होचुरेतेन नः स नानाऽसदेतेन विष्वङ् यो न-ऽएतदतिक्रामादिति कस्योपद्रष्टुरिति तनूनप्तुरेव शाक्करस्येति ‡यो वा ऽअयं पवत ऽएष तनूनपाच्छाक्करः सोऽयं प्रजाना-मुपद्रष्टा प्प्रविष्टस्ताविमौ प्प्राणोदानौ ॥५॥ तस्मादाहुः । मनो देवा मनुष्यस्याऽऽजानन्तीति मनसा सङ्कल्पयति तत्प्राणमपि पद्यते प्प्राणो वातं वातो देवेभ्य ऽआचष्टे यथा पुरुषस्य मनः ॥६॥ तस्मादेतदृषिणाऽभ्यनूक्तम् । मनसा सङ्कल्पयति तद्वातमपि गच्छति । वातो देवेभ्य ऽआचष्टे यथा पुरुष ते मन ऽइति ॥ ७ ॥ ते देवाः । जुष्टास्तनूः प्प्रियाणि धामानि सार्द्धं समवददिरे ते होचुरेतेन नः स नाना-ऽसदेतेन विष्वङ् यो न ऽएतदतिक्रामादिति तद्देवा ऽअप्प्ये-

---

* "अजर्यं सङ्गतम्" पा० सू० ( ३. १. १०५ ) इत्यनेन निपात्यते ।

† अत्र शतम् १७०० ॥

‡ 'सो वा' इति 'ख' पुस्तके पाठः ।

तर्हि नाऽतिक्रामन्ति के हि स्युर्य्यदतिक्रामेयुरनृतꣳ हि वदेयुरेकꣳ ह वै देवा व्रतं चरन्ति सत्यमेव तस्मादेषां जित*मनपजय्यं तस्माद्यश ऽएवꣳ ह वा ऽअस्य जितमनपजय्यमेवं यशो भवति य ऽएवं विद्वान्त्सत्यं वदति तदेतत्तानूनप्त्रं निदानेन ॥ ८ ॥ ते देवाः । जुष्टास्तनूः प्रियाणि धामानि सार्द्धꣳ समवदद्रिरेऽथैत ऽआज्यान्यवेव गृह्णाना जुष्टास्तनूः प्रियाणि धामानि सार्द्धꣳ समवद्यन्ते तस्मादु ह न सर्वेणेव समभ्यवेयान्नेदिमे जुष्टास्तन्वः प्रियाणि धामानि सार्द्धꣳ समभ्यवायानिति येनो ह समभ्यवेयान्नाऽस्मै द्रुह्येदिदꣳ ह्याहुर्न्न सतानूनप्त्रिणे द्रोग्धव्यमिति ॥ ९ ॥ अथाऽतो गृह्णात्येव । आपतये त्वा परिपतये गृह्णामी'ति यो वाऽअयं पवत ऽएष ऽआ च पतति परि च पतत्येतस्मा ऽउ हि गृह्णाति तस्मादाहाऽऽपतये त्वा परिपतये गृह्णामीति ॥ १० ॥ 'तनूनप्त्रे[2] शाक्वराये'ति । यो वा ऽअयं पवतऽएष तनूनपा शाक्वर ऽएतस्मा ऽउ हि गृह्णाति तस्मादाह तनूनप्त्रे शाक्वरायेति ॥ ११ ॥ 'शक्मन[3] ऽओजिष्ठाये'ति । एष वै शक्मौजिष्ठ ऽएतस्मा ऽउ हि गृह्णाति तस्मादाह शक्मन ऽओजिष्ठायेति ॥ १२ ॥ अथाऽतः समवमृशन्त्येव । एतद्ध देवा भूयः समामिर ऽइत्थं नः सोऽमुथाऽसद्यो नऽएतदतिक्रामादिति तथो ऽएवैत ऽएतत्सममन्त ऽइत्थं

* "क्षय्यजय्यौ शक्यार्थे" ( पा० सू० ६. १. ८१ ) इति।

† अध्वर्युप्रभृति-षोडशर्त्विजो यजमानश्च मिथो द्रोहशून्या भवन्त एकमत्या यज्ञकार्यं सम्पादयितुं आज्यस्पर्शनपूर्वकं यत् शपथं कुर्वन्ति, तदेव कर्म तानूनप्त्रमित्युच्यते ।

(१) शु० सं० अ० ५ क० ५। (२) शु० सं० अ० ५ क० ५। (३) शु० सं० अ० ५ क० ५।

नः सोऽमुथा सद्यो न ऽएतदतिक्रामादिति ॥ १३ ॥ ते समवमृशन्ति । 'अनाधृष्टमस्यनाधृष्यं देवानामोज' ऽइत्यनाधृष्टा हि देवा ऽआसन्ननाधृष्याः सह सन्तः समानं वदन्तः समानं दक्षाणा देवानामोज ऽइति देवानां वै जुष्टास्तन्वः प्रियाणि धामा'न्न्यनभिशस्त्यभिशस्तिपाऽअनभिशस्तेन्न्यमि'ति सर्वाᳫं हि देवा ऽअभिशस्तिं तीर्णा'ऽअञ्जसा सत्यमुपगेषमि'ति सत्यं वदानि मेदमतिक्रमिषमित्येवैतदाह 'स्विते मा धा' ऽइति स्विते हि तद्देवा ऽआत्मानमदधत यत्सत्यमवदन्न्यत्सत्यमकुर्वँस्तस्मादाह स्विते मा धा ऽइति ॥ १४ ॥ अथ यास्तद्देवाः । जुष्टास्तनूः प्रियाणि धामानि सार्द्धᳫं समवददिरे तदिन्द्रे सन्न्यदधतैष वाऽइन्द्रो य ऽएष तपति न ह वा ऽएषोऽग्रे तताप यथा हैवेदमन्न्यत्कृष्णमेवᳫं हैवाऽऽस तेनैवैतद्वीर्य्येण तपति तस्माद्यदि बहवो दीक्षेरन्न्गृहपतय ऽएव व्रतमभ्युत्सिच्च्य प्रयच्छेयुः स हि तेषामिन्द्रभाजनं भवति यद्यु दक्षिणावता दीक्षेत यजमानायैव व्रतमभ्युत्सिच्च्य प्रयच्छेयुरिदᳫं ह्याहुरिन्द्रो यजमान ऽइति ॥ १५ ॥ अथ यास्तद्देवाः । जुष्टास्तनूः प्रियाणि धामानि सार्द्धᳫं समवददिरे तत्सार्द्धᳫं सञ्जग्ने तत्सामाऽभवत्तस्मादाहुः सत्यᳫं साम देवजᳫं सामेति ॥ १६ ॥

चतुर्थाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥



(१) शु० सं० अ० ५ क० ५। (२) शु० सं० अ० ५ क० ५। (३) शु० सं० अ० ५ क० ५। (४) शु० सं० अ० ५ क० ५।

[ अथाऽवान्तरदीक्षा ]

आतिथ्येन वै देवा ऽइष्ट्वा। तान्त्समदविन्दत्ते तानूनप्त्रैः समशाम्म्यँस्त ऽएतस्य प्रायश्चित्तिमैच्छन्न्यदन्न्योऽन्न्यं पापमवदन्नाऽऽह पुराऽवभृथात्पुनर्दीक्षामवाऽकल्पयँस्त ऽएतामवान्तरां *दीक्षामपश्यन् ॥ १ ॥ तेऽग्निनैव त्वचं विपल्ल्याऽङ्गयन्त। तपो वा ऽअग्निस्तपो दीक्षा तदवान्तरां दीक्षामुपायँस्तद्यदवान्तरां दीक्षामुपायँस्तस्मादवान्तरदीक्षा सन्तरामङ्गुलीराञ्चन्त सन्तरां मेखलां पर्य्यस्तामेवैनामेतत्सतीं पर्य्यास्यन्त तथो ऽएवैष ऽएतद्यदृतं प्राचीनमनृत्यं वा करोत्यनृत्यं वा वदति तस्यैवैतत्प्रायश्चित्तिं कुरुते ॥ २ ॥ सोऽग्निनैव त्वचं विपल्ल्यङ्गयते। तपो वा ऽअग्निस्तपो दीक्षा तदवान्तरां दीक्षामुपैति सन्तरामङ्गुलीरचते सन्तराम्मेखलां पर्य्यस्तामेवैनामेतत्सतीं पर्य्यस्यते प्रजामु हैव तद्देवा ऽउपाऽऽयन् ॥३॥ तेऽग्निनैव त्वचं विपल्ल्याऽङ्गयन्त। अग्निर्वै मिथुनस्य कर्त्ता प्रजनयिता तत्प्रजामुपाऽऽयन्त्सन्तरामङ्गुलीराञ्चन्त सन्तराम्मेखलान्तत्प्रजामात्मन्नकुर्वत तथो ऽएवैष ऽएतत्प्रजामेवोपैति ॥ ४ ॥ सोऽग्निनैव त्वचं विपल्ल्यङ्गयते। अग्निर्वै मिथुनस्य कर्त्ता प्रजनयिता तत्प्रजामुपैति सन्तरामङ्गुलीरचते सन्तराम्मेखलां तत्प्रजामात्मन्न्कुरुते ॥ ५ ॥ देवानामु ह स्म दीक्षितानाम्। यः समिद्धारो वा स्वाध्यायं वा †विसृज्ज्यते तꣳ ह स्मेतरस्यैवेतरꣳ रूपेणेतरस्येतरमसुररक्ष-

* तै० सं० ( ६. २. २. ७ ) द्रष्टव्यम् ।

† 'विसृजते' इति 'ग-च' पुस्तकयोः ।

सानि जिघाꣳसन्ति ते ह पापं वदन्त ऽउपसमेयुरिति वै मां
त्वमचिकीर्षीरिति मा जिघाꣳसीरित्यग्निर्हैव तथा नाऽन्न्यु-
मुवादाऽग्निं तथा नाऽन्न्यꣳ ॥ ६ ॥ ते होचुः । अपीत्थं
त्वामग्नेऽवादिषू३रिति नैवाऽहमन्न्यं न मामन्न्य ऽइति
॥ ७ ॥ तेऽविदुः । अयं वै नो विरक्षस्तमोऽस्यैव रूपमसाम
तेन रक्षाꣳस्यतिमोक्ष्यामहे तेन स्वर्ग्गं लोकꣳ समश्नुवि-
ष्यामह ऽइति तेऽग्नेरेव रूपमभँवस्तेन रक्षाꣳस्यत्त्यमुच्च्यन्त
तेन स्वर्ग्गं लोकꣳ समाश्नुवत तथो ऽएवैष ऽएतदग्नेरेव
रूपं भवति तेन रक्षाꣳस्यतिमुच्च्यते तेन स्वर्ग्गं लोकꣳ
समश्नुते स वै समिधमेवाऽभ्यादधदवान्तरदीक्षामुपैति
॥ ८ ॥ स समिधमभ्यादधाति । * ‘[1]अग्ने व्रतपास्त्वे व्रतपा’
ऽइत्यग्निर्हि देवानां व्रतपतिस्तस्मादाहाऽग्ने व्रतपास्त्वे व्रतपा-
ऽइति ‘या [2]तव तनूरियꣳ सा मयि यो मम तनूरेषा
सा त्वयि । सह नौ व्रतपते व्रतानी’ति तदग्निना त्वचं विप-
ल्ल्यङ्ग्यते ‘ऽनु मे[3] दीक्षां दीक्षापतिर्म्मन्न्यतामनु तपस्तपस्प-
तिरि’ति तदवान्तरां दीक्षामुपैति सन्तरामङ्गुलीरचते सन्तरा-
म्मेखलां पर्य्यस्तामेवैनामेतत्सतीं पर्य्यस्यते ॥ ९॥ अथैनमतो
†मदन्तीभिरुपचरन्ति। तपो वा ऽअग्निस्तपो मदन्त्यस्तस्मादेनं
मदन्तीभिरुपचरन्ति ॥ १० ॥ अथ ‡ मदन्तीरुपस्पृश्य ।

* का० श्रौ० सू० ८. २. ४ ।

† पत्नीयजमानयोः क्रतोश्च दृष्टाऽदृष्टकार्यार्थास्तप्ता आपो ‘मदन्त्य’ इत्युच्यन्ते । यत्स्पर्शोऽपि शुद्धिकरः, एतादृश आपो ‘मदन्त्य’ इति गोपीनाथः । ( सत्या० श्रौ० सू० ७. ३ )

‡ ‘मदन्तीभिरुप’ इति पाठः ‘ग-च’ पुस्तकयोः । ( का० श्रौ० सू० ८. २. ६ )

( १ ) शु० सं० अ० ५ क० ६ । ( २ ) शु० सं० अ० ५ क० ६ । ( ३ ) शु० सं० अ० ५ क० ६ ।

राजानमाप्प्याययन्ति तद्यन्न्मदन्तीरुपस्प्पृश्य राजानमाप्प्याययन्ति * वज्ज्रो वा ऽआज्यꣳ रेतꣳ सोमो नेद्वज्ज्रेणाऽऽज्येन रेतꣳ सोमꣳ हिनसामेति तस्मान्न्मदन्तीरुपस्प्पृश्य राजानमाप्प्याययन्ति ॥ ११ ॥ तदाहुꣳ । यस्मा ऽएतदाप्प्यायनं क्रियत ऽआतिथ्यꣳ सोमाय तमेवाऽत्र ऽआप्प्याययेयुरथाऽवान्तरदीक्षामथ तानूनप्त्राणीति तदु तथा न कुर्य्याद्यज्ञस्य वा ऽएवं कर्म्माऽत्र वा ऽएनान्त्समदविन्दत्ते सꣳशममेव पूर्वमुपायन्नथाऽवान्तरदीक्षामथाऽऽप्प्यायनम् ॥१२॥ तद्यदाप्प्याययन्ति । देवो वै सोमो दिवि हि सोमो व्वृत्रो वै सोम ऽआसीत्तस्यैतच्छरीरं यद्गिरयो यदश्मानस्तदेषोऽशानानामौषधिर्ज्जायत ऽइति ह स्माऽऽह श्वेतकेतुरौद्दालकिस्तामेतदाहृत्याऽभिषुण्वन्ति तां दीक्षोपसद्भिस्तानूनप्त्रैराप्प्यायनेन सोमं कुर्वन्तीति तथो ऽएवैनामेष ऽएतद्दीक्षोपसद्भिस्तानूनप्त्रैराप्प्यायनेन सोमं करोति ॥ १३ ॥ 'मधु सारघमि'ति वा ऽआहुꣳ । यज्ञो ह वै मधु सारघमथैत ऽएव सरघो मधुकृतो यदृत्विजस्तद्यथा मधु मधुकृत ऽआप्प्याययेयुरेवमेवैतद्यज्ञमाप्प्याययन्ति ॥ १४ ॥ †यज्ञेन वै देवाꣳ । इमां जितिं जिग्ग्युर्य्यैषामियं जितिस्ते होचुꣳ कथं न ऽइदं मनुष्यैरनभ्यारोह्यꣳ स्यादिति ते यज्ञस्य रसं धीत्वा यथा मधु मधुकृतो निर्द्धयेयुर्विदुह्य यज्ञं यूपेन योपयित्वा तिरो-

* आज्यस्य वज्ररूपत्वम् , ( तै० सं० ६. २. २. ४ ) अत्र द्रष्टव्यम् ।

( १ ) शु० सं० अ० १९ क० ९१ ।

† तै० सं० २. २. ६. इत्यत्र द्रष्टव्यम् ।

ऽभवन्नथ यदेनेनाऽयोपयँस्तस्माद्यूपो नाम ॥ १५ ॥ तद्धा-
ऽऋषीणामनुश्रुतमास । ते यज्ञꣳ समभरन्यथाऽयं यज्ञꣳ
सम्भृत ऽएवं व्वा ऽएष यज्ञꣳ सम्भरति यो दीक्षते वाग्वै
यज्ञस्तद्यदेवाऽत्र यज्ञस्य निर्ढीतं यद्विदुग्धं तदेवैतत्पुनराप्प्या-
ययति ॥१६॥ ते वै षड् भूत्वाऽऽप्प्याययन्ति । षड्वा ऽऋ-
तव ऽऋतव ऽएवैतद्भूत्वाऽऽप्प्याययन्ति ॥१७॥ त ऽआप्प्या-
ययन्ति । 'अꣳशुरꣳशुष्टे[1] देव सोमाऽऽप्प्यायतामि'ति तद-
स्याऽꣳशुमꣳशुमेवाऽऽप्प्यायय'न्तीन्द्रायैक[2] धनविद्' ऽइतीन्द्रो
वै यज्ञस्य देवता तस्मादाहेन्द्रायेत्येकधनविद ऽइति शतꣳ
शतꣳ ह स्म वा ऽएष देवान्प्रत्येकैक ऽएवाꣳशुरेकधनानाप्प्या-
यते दश-दश 'वाऽऽतुभ्यमिन्द्रꣳ[3] प्प्यायतामात्वमिन्द्राय
प्प्यायस्वे'तीन्द्रो वै यज्ञस्य देवता सा यैव यज्ञस्य देवता
तामेवैतदाप्प्याययत्यात्वमिन्द्राय प्प्यायस्वेति तदेतस्मिन्ना-
ऽऽप्प्यायनं दधा'त्याप्प्याययाऽस्मान्त्सखीन्त्सन्न्या[4] मेधये'ति
स यत्सनोति तत्तदाह यत्सन्न्येत्यथ यदनुब्रूते तदु तदाह
यन्मेधयेति 'स्वस्ति[5] ते देव सोम सुत्यामशीये'त्येका वा-
ऽएतेषामाशीर्भवत्यृत्विजां च यजमानस्य च यज्ञस्योदृचं
गच्छेमेति यज्ञस्योदृचं गच्छानीत्येवैतदाह ॥१८॥ अथ प्प्रस्तरे
निन्हुवते । *उत्तरत ऽउपचारो वै यज्ञोऽथैतद्दक्षिणे †वाऽन्निव-
त्याप्प्याययन्त्यग्निर्वै यज्ञस्तद्यज्ञं पृष्ठतꣳ ‡कुर्वते तन्निमत्थ्या

(१) शु० सं० अ० ५ क० ७। (२) शु० सं० अ० ५ क० ७। (३) शु० सं० अ० ५ क० ७। (४) शु० सं० अ० ५ क० ७। (५) शु० सं० अ० ५ क० ७।

* 'उत्तरत उपचारो यज्ञः' का० श्रौ० सू० १. ८. २६ द्रष्टव्यम् ।

† 'नाऽन्वि' इति 'ख' पुस्तके ।

‡ 'कुर्वन्ति' इति 'ग-च' पुस्तकयोः ।

कुर्वन्ति देवेभ्य ऽआवृश्च्यन्ते यज्ञो वै प्रस्तरस्तद्यज्ञं पुनरारभन्ते तस्यो हैषा प्रायश्चित्तिस्तथो हैषामेतन्न मिथ्याकृतं भवति न देवेभ्य ऽआवृश्च्यन्ते तस्मात्प्रस्तरे निन्हुवते ॥१९॥ तदाहुः। अक्ते निन्हुवीरा३न्नक्ता३ ऽइत्यनक्ते हैव निन्हुवीरन्ननुप्रहरणꣳ ह्येवाऽक्तस्य ॥२०॥ ते निन्हुवते । 'एष्टा रायः प्रेषे भगाय ऽऋतमृतवादिभ्य' ऽइति सत्यꣳ सत्यवादिभ्य ऽइत्येवैतदाह 'नमो द्यावापृथिवीभ्यामि'ति तदाभ्यां द्यावापृथिवीभ्यां निन्हुवते ययोरिदꣳ सर्वमधि ॥ २१ ॥ अथाऽऽह *समुल्लुप्य प्रस्तरम् । अग्नीन्मदन्त्यापा३ ऽइति मदन्तीत्यग्नीदाह ताभिरेहीत्युपरुर्युपर्य्यग्निमतिहरति स यन्नाऽनुप्रहरत्येतेन ह्यत ऽऊर्द्ध्वान्यहानि प्रचरिष्यन्भवत्यथ यदुपर्य्युपर्य्यग्निमतिहरति तदेवाऽस्याऽनुप्रहृतभाजनं भवति † तमग्नीधे प्रयच्छति तमग्नीन्निदधाति ॥ २२ ॥

चतुर्थाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

[ अथोपसदिष्टिः ]

‡ग्रीवा वै यज्ञस्योपसदः शिरः ‡‡प्रवर्ग्यः। तस्माद्यदि $प्रवर्ग्यवान्भवति प्रवर्ग्येण प्रचर्य्याऽथोपसद्भिः प्रचरन्ति

(१) शु० सं० अ० ५ क० ७। (२) शु० सं० अ० ५ क० ७ ।

* का० श्रौ० सू० ८. २. १०।

† का० श्रौ० सू० ८. २. १२.।

‡ ( ऐ० ब्रा० १. ५. ८ ) इत्यत्र आतिथ्यस्य शिरस्त्वमुपसदां ग्रीवात्वम् ।

‡‡ का० श्रौ० सू० ८. २. १५।

$ का० श्रौ० सू० ८. २. १५ । आश्वलायनोऽपि 'प्रथमयज्ञेनैके घर्मम्' (४.८.१६) इति ।

तद् ग्रीवाः प्प्रतिदधति ॥ १ ॥ तद्याः पूर्वाह्णेऽनुवाक्या भवन्ति । ता ऽअपराह्णे* याज्या या याज्यास्ता ऽअनुवाक्यास्तद्व्यतिषजति तस्मादिमानि ग्रीवाणां पर्वाणि व्यतिषक्तानीमान्न्यस्थीनि ॥ २ ॥ देवाश्च वा ऽअसुराश्च । उभये प्प्राजापत्याः पस्पृधिरे ततोऽसुरा ऽएषु लोकेषु पुरश्चक्रिरेऽयस्मयीमेवाऽस्मिँल्लोके रजतामन्तरिक्षे हरिणीं दिवि ॥ ३ ॥ तद्वै देवा ऽअस्पृण्वत । त ऽएताभिरुपसद्भिरुपाऽऽसीदँस्तद्यदुपाऽऽसीदँस्तस्मादुपसदो नाम ते पुरः प्प्राऽभिन्दन्निमाँल्लोकान्प्राऽजयँस्तस्मादाहुरुपसदा पुरं जयन्तीति यदुहोपाऽऽसते तेनेमां मानुषीं पुरं जयन्ति ॥ ४ ॥ एताभिर्वै देवा ऽउपसद्भिः । पुरः प्प्राऽभिन्दन्निमाँल्लोकान्प्राऽजयँस्तथो ऽएवैष ऽएतन्नाऽऽहैवाऽस्मा ऽअस्मिँल्लोके कश्चन पुरः कुरुत ऽइमानेवैतल्लोकान्प्रभिनत्तीमाँल्लोकान्प्रजयति तस्मादुपसद्भिर्यजते ॥ ५ ॥ ता वा ऽआज्यहविषो भवन्ति । वज्ज्रो वा ऽआज्यमेतेन वै देवा वज्ज्रेणाऽऽज्येन पुरः प्प्राऽभिन्दन्निमाँल्लोकान्प्राजयँस्तथो ऽएवैष ऽएतेन वज्ज्रेणाऽऽज्येनेमाँल्लोकान्प्रभिनत्तीमाँल्लोकान्प्रजयति तस्मादाज्यहविषो भवन्ति ॥ ६ ॥ स वा ऽअष्टौ कृत्वो जुह्वां गृह्णाति । चतुरुपभृत्यथो ऽइतरथाऽऽहुश्चतुरेव कृत्वो जुह्वां गृह्णीयादष्टौ कृत्व ऽउपभृतीति ॥ ७ ॥ स वा ऽअष्टावेव

* 'अग्निर्वृत्राणि जङ्घनत्' 'य उग्र इव शर्यहाः' ऋ० सं० ६. १६. ३४, ४९। 'त्वं सोमासि सत्पतिः, गयस्फानो अमीवहा:' ऋ० सं० १. ९१. ५, १२। 'इदं विष्णुर्विचक्रमे, त्रीणिपदा विचक्रमे' ऋ० सं० १. २२. १७, १८। इति त्रीणि युगलानि क्रमेणाऽग्निग्नीषोमविष्णूनां याज्यापरोनुवाक्या भवन्ति।

कृत्वो जुह्वां गृह्णाति । चतुरुपभृति तद्वज्रमभिभारं करोति तेन वज्रेणाऽभिभारेणेमाँल्लोकान्त्प्रभिनत्तीमाँल्लोकान्न्प्रजयति ॥ ८ ॥ अग्नीषोमौ वै देवानाꣳ सयुजौ । ताभ्याꣳ सार्द्धं गृह्णाति विष्णव ऽएकाकिनेऽन्न्यतरमेवाऽऽघारमाघारयति यꣳ स्रुवेण प्प्रातिक्रामति वा ऽउत्तरमाघारमाघारुर्षाऽभिजित्त्या ऽअभिजयानीति तस्मादन्न्यतरमेवाऽऽघारमाघारयति यꣳ स्रुवेण ॥ ९ ॥ अथाऽऽश्राव्व्य * न होतारं प्रव्वृणीते । सीद होतरित्त्येवाऽऽहोपविशति होता होतृषदन ऽउपविश्य प्प्रसौति प्प्रसूतोऽद्ध्वर्युः स्रुचावादत्ते ॥ १० ॥ सऽआहाऽतिक्राम † न्नग्नयेऽनुब्रूहीति । आश्राव्व्याऽऽहाऽग्निं यजेति ‡ वषट्कृते जुहोति ॥ ११ ॥ अथाऽऽह सोमायाऽनुब्रूहीति । आश्राव्व्याऽऽह सोमं यजेति वषट्कृते जुहोति ॥१२॥ अथ यदुपभृत्याज्यं भवति । तत्समानयमान ऽआह ‡‡ विष्णवेऽनुब्रूहीत्त्याश्राव्व्याऽऽह विष्णुं यजेति वषट्कृते जुहोति ॥ १३ ॥ स यत्समानत्र तिष्ठञ्जुहोति । न यथेदं प्रचरन्त्सञ्चरत्त्यभिजित्त्या ऽअभिजयानीत्त्यथ यदेता देवता यजति वज्रमेवैतत्सꣳस्करो $ त्त्यग्निमनीकꣳ सोमꣳ शल्यं विष्णुं कुल्मलꣳ ॥ १४ ॥ संवत्त्सरो हि वज्रः । अग्निर्वाऽअहः सोमो रात्रिरथ यदन्तरेण तद्विष्णुरेतद्वै परिप्प्लवमानꣳ

* का० श्रौ० सू० ८. २. २९ ।

† का० श्रौ० सू० ८. २. ३० ।

‡ 'अर्धं हुत्वा सोमायेति' का० श्रौ० सू० ८. २. ३१ ।

‡‡ 'विष्णवे समानीयेति' का० श्रौ० सू० ८. २. ३१ ।

$ अग्निमित्यारभ्य विष्णुमित्यतः प्राक् ग्रन्थः (१. ४. ८) ऐ० ब्रा० एवमेव । तै० सं० ६. २. ३. १ ।

संवत्सरं करोति ॥ १५ ॥ संवत्सरो वज्रः । एतेन वै देवाः संवत्सरेण वज्रेण पुरः प्राऽभिन्दन्निमाँल्लोकान्प्राऽजयँस्तथो ऽएवैष ऽएतेन संवत्सरेण वज्रेणेमाँल्लोकान्प्रभिनत्तीमाँल्लोकान्प्रजयति तस्मादेता देवता यजति ॥ १६ ॥ स वै तिस्र ऽउपसद ऽउपेयात् । त्रयो वा ऽऋतवः संवत्सरस्य संवत्सरस्यैवैतद्रूपं क्रियते संवत्सरमेवैतत्सꣳस्करोति *द्विरेकया प्रचरति द्विरेकया ॥ १७॥ †ताः षट् सम्पद्यन्ते । षड्वा ऽऋतवः संवत्सरस्य संवत्सरस्यैवैतद्रूपं क्रियते संवत्सरमेवैतत्सꣳस्करोति ॥ १८ ॥ यद्यु द्वादशोपसद ऽउपेयात् । द्वादश वै मासाः संवत्सरस्य संवत्सरस्यैवैतद्रूपं क्रियते संवत्सरमेवैतत्सꣳस्करोति द्विरेकया प्रचरति द्विरेकया ॥ १९ ॥ ताश्चतुर्विंꣳशतिः सम्पद्यन्ते । चतुर्विंꣳशतिर्वै संवत्सरस्याऽर्द्धमासाः संवत्सरस्यैवैतद्रूपं क्रियते संवत्सरमेवैतत्सꣳस्करोति ॥ २० ॥ ‡स यत्सायम्प्रातः प्रचरति । तथा ह्येव सम्पत्सम्पद्यते स यत्पूर्वाह्णे प्रचरति तज्जयत्यथ यदपराह्णे प्रचरति सुजितमसदित्यथ यज्जुहोतीदं वै पुरं युध्यन्ति तां जित्वा स्वाꣳ सतीं प्रपद्यन्ते ॥२१॥ स यत्प्रचरति । तद्युध्यत्यथ यत्सन्तिष्ठते तज्जयत्यथ यज्जुहोति स्वामेवैतत्सतीं प्रपद्यते ॥ २२ ॥ स जुहोति । ‡‡यया

* 'द्विरेकया चरति' का० श्रौ० ८. २. ३४ ।

† तै० सं० ६. २. ३. ३–४ द्रष्टव्यम् ।

‡ का० श्रौ० सू० ८. २. ३५ द्रष्टव्यम् ।

‡‡ का० श्रौ० सू० ८. २. ३६ । तै० सं० ६. २. ३. १–५ द्रष्टव्यम् ।

द्विरेकस्याऽह्नः प्प्रचरिष्यन्भवति *'या ते ऽअग्नेऽयःशया तनूर्वर्षिष्ठा गह्वरेष्ठा। †उग्रं व्वचो ऽअपाऽवधीत्त्वेषं व्वचोऽपावधीत्स्वाहे'त्येवन्रूपा हि साऽऽसीदयस्मयी हि साऽऽसीत् ॥ २३ ॥ अथ जुहोति। यया द्विरेकस्याऽन्ह्नः प्प्रचरिष्यन्भवति 'या ते ‡ऽअग्ने रजःशया तनूर्वर्षिष्ठा गह्वरेष्ठा। उग्रं व्वचो ऽअपाऽवधीत्त्वेषं व्वचो ऽअपावधीत्स्वाहे'-त्येवन्रूपा हि साऽऽसीद्रजता हि साऽऽसीत् ॥ २४ ॥ अथ जुहोति। यया द्विरेकस्याऽह्नः प्प्रचरिष्यन्भवति 'या ते ऽअग्ने हरिशया तनूर्वर्षिष्ठा गह्वरेष्ठा। उग्रं व्वचोऽपावधीत्त्वेषं व्वचो ऽअपावधीत्स्वाहे'त्येवन्रूपा हि साऽऽसीद्धरिणी हि साऽऽसीद्यद्यु द्वादशोपसद ऽउपेयाच्चतुरहमेकया प्प्रचरेच्चतुरहमेकया ॥ २५ ॥ अथाऽतो व्व्रतोपसदामेव। पर ऽउर्व्वीर्व्वा ऽअन्न्या ऽउपसदः परोऽह्वीरन्न्याः स यासामेकं प्रथमाहं दोग्ध्यथ द्वावथ ‡‡ त्रींस्ताः पर ऽउर्व्वीरथ यासां त्रीन्प्रथमाहं दोग्ध्यथ द्वावथैकं ताः परोऽह्वीर्य्या वै परोऽह्वीस्ताः पर ऽउर्व्वीर्य्याः पर ऽउर्व्वीस्ताः

(१) शु० सं० अ० ५ क० ८। (२) शु० सं० अ० ५ क० ८। (३) शु० सं० अ० ५ क० ८।

* 'उपसदं जुहोति स्रुवेण या ते इति' का० श्रौ० सू० ८. २. ३३।

† 'यथा असुरैः पराजिता देवा अन्नपाने अलभमानाः क्षुत्पिपासाभ्यां वयं पीडिता इति यदूचुस्तद् उग्रं वचः। 'तथा किं वा वीरहत्यादि महापातकमस्माभिः कृतमिति क्लिश्नन्तो यद्वाक्यं सन्तापहेतुत्वेन दीप्तमूचुस्तत् त्वेषं वचः' तथा च—"**अशनायापिपासे ह वा उग्रं वच एनश्च वै वीरहत्यं च त्वेषं** वचः" तै० सं० १. २. ११। इति।

‡ का० श्रौ० सू० ८. २. ३६।

‡‡ का० श्रौ० सू० ८. २. ३७।

परोऽह्वीः ॥ २६ ॥ तपसा वै लोकं जयन्ति । तदस्यैतत्परः पर ऽएव वरीयस्तपो भवति परः-परः श्रेयाꣳसं लोकं जयति वसीयानु हैवाऽस्मिँल्लोके भवति य ऽएवं विद्वान्परोऽह्वीरुपसद ऽउपैति तस्मादु परोऽह्वीरेवोपसद ऽउपेयाद्यद्यु द्वादशोपसद ऽउपेयात्त्रीँश्चतुरहं *दोहयेद् द्वौ चतुरहमेकं चतुरहम् ॥ २७ ॥

चतुर्थाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

इति चतुर्थोऽध्यायः ॥ ४ ॥

माध्यन्दिनीये शतपथब्राह्मणे तृतीयः प्रपाठकः ॥ ३ ॥

कण्डिकासंख्या ॥१२१॥

[ महावेदिमानम् ]

तस्य ऽएष पूर्वार्द्ध्यो वर्षिष्ठ स्स्थूणाराजो भवति । तस्मात्प्राङ् प्रक्रामति त्रीन्विक्रमाँस्तच्छङ्कुं निहन्ति †सोऽन्तःपातः ॥ १ ॥ तस्मान्मद्ध्यमाच्छङ्कोः । दक्षिणा पञ्चदश विक्रमान्प्रक्रामति तच्छङ्कुं निहन्ति सा दक्षिणा श्रोणिः ॥ २ ॥ तस्मान्मद्ध्यमाच्छङ्कोः । उदङ् पञ्चदश विक्रमान्प्रक्रामति तच्छङ्कुं निहन्ति सोत्तरा श्रोणिः ॥ ३ ॥ तस्मान्मद्ध्यमाच्छङ्कोः । प्राङ् षट्त्रिꣳशतं विक्रमान्प्रक्रामति तच्छङ्कुं निहन्ति स पूर्वार्द्धः ॥ ४ ॥ तस्मान्मद्ध्यमाच्छङ्कोः । दक्षिणा द्वादश विक्रमान्प्रक्रामति तच्छङ्कुं वि-

* का० श्रौ० ८. ३. १-२ । तै० सं० ६. २. ३. ७-१४ द्रष्टव्यम् ।

† 'पूर्वार्ध्यात्स्तम्भात् पुरस्तात् त्रिषु प्रक्रमेषु शङ्कुं निहन्ति सोऽन्तःपात्यः' का० श्रौ० सू० ८. ३. ७ । इत्यारभ्य ८-१२ द्रष्टव्यम् ।

हन्ति स दक्षिणोऽक्षसः ॥ ५ ॥ तस्मान्मध्यमाच्छङ्कोः । उदङ् द्वादश विक्रमान्प्रक्रामति तच्छङ्कुं निहन्ति स ऽउत्तरोऽक्षस ऽएषा मात्रा वेदेः ॥ ६ ॥ अथ षत्त्रिꣳशद्विक्रमा पश्चाद्भवति । त्रिꣳशदक्षरा वै विराड्विराजा वै देवाऽअस्मिँल्लोके प्रत्यतिष्ठँस्तथो ऽएवैष ऽएतद्विराजैवाऽस्मिँल्लोके प्रतितिष्ठति ॥ ७ ॥ अथो ऽअपि त्रयस्त्रिꣳशत्स्युः । त्रयस्त्रिꣳशदक्षरा वै विराट् तद्विराजैवाऽस्मिँल्लोके प्रतितिष्ठति ॥ ८ ॥ अथ यत्षट्त्रिꣳशद्विक्रमा प्राची भवति । षट्त्रिꣳशदक्षरा वै बृहती बृहत्या वै देवाः स्वर्गं लोकꣳ समाश्नुवत तथो ऽएवैष ऽएतद्बृहत्यैव स्वर्गं लोकꣳ समश्नुते सोऽस्य दिव्व्याऽऽहवनीयो भवति ॥ ९ ॥ अथ यच्चतुर्विꣳशतिविक्रमा पुरस्ताद्भवति । चतुर्विꣳशत्यक्षरा वै गायत्री पूर्वार्द्धो वै यज्ञस्य गायत्री पूर्वार्द्ध ऽएष यज्ञस्य तस्माच्चतुर्विꣳशतिविक्रमा पुरस्ताद्भवत्येषा मात्रा वेदेः ॥ १० ॥ अथ यत्पश्चाद्वरीयसी भवति । पश्चाद्वरीयसी पृथुश्रोणिरिति वै योषां प्रशꣳसन्ति यद्वेव पश्चाद्वरीयसी भवति पश्चादेवैतद्वरीयः प्रजननं करोति तस्मात्पश्चाद्वरीयसः प्रजननादिमाः प्रजाः प्रजायन्ते ॥ ११ ॥ नासिका ह वाऽएषा यज्ञस्य यदुत्तरवेदिः । अथ यदेनामुत्तरां वेदेरुपकिरति तस्मादुत्तरवेदिर्नाम ॥ १२ ॥ द्वय्यो ह वा ऽइदमग्रे प्रजाऽआसुः । आदित्याश्चैवाऽङ्गिरसश्च ततोऽङ्गिरसः पूर्वे यज्ञꣳ समभरँस्ते यज्ञꣳ सम्भृत्योचुरग्निमिमां नः श्वः सुत्यामादित्येभ्यः प्रब्रूह्यनेन नो यज्ञेन याजयतेति ॥१३॥

ते हाऽऽदित्या ऽऊचुः । उपजानीत यथाऽस्मानेवाऽङ्गिरसो जयान्न वयमङ्गिरस ऽइति ॥ १४ ॥ ते होचुः । वा ऽअन्न्येन यज्ञादपक्रमणमस्त्यन्तरामेव सुत्यां ध्रियामहा ऽइति ते यज्ञᳪ सञ्जह्रुस्ते यज्ञᳪ सम्भृत्योचुः श्वःसुत्यां वै त्वमस्म-भ्यमग्ने प्प्राऽवोचोऽथ वयमद्य सुत्यामेव तुभ्यं प्रब्रूमोऽङ्गि-रोभ्यश्च तेषां नस्त्वᳪ होताऽसीति ॥ १५ ॥ तेऽन्न्यमेव प्प्रति प्प्राजिग्घ्युः । अङ्गिरसोऽच्छ ते हाऽप्प्यङ्गिरसोऽग्नये-ऽन्न्वागत्य चुक्रुधुरिव कथं नु नो दूतश्चरन्न प्प्रत्यादृथा-ऽइति ॥ १६ ॥ स होवाच । अनिन्द्या वै माऽवृषत सोऽनि-न्द्यैर्वृतो नाऽशकमपक्रमितुमिति तस्मादु हाऽनिन्द्यस्य व्वृतो नाऽपक्रामेत्त ऽएतेन सद्यः क्रियाऽङ्गिरस ऽआदित्या-नयाजयन्त्स सद्यᳪक्रीः ॥ १७ ॥ तेभ्यो व्वाचं दक्षिणा-मानयन् । तां न प्प्रत्यगृह्णन्न्हास्यामहे यदि प्प्रतिग्रहीष्याम-ऽइति तदु तद्यज्ञस्य कर्म्म न व्व्यमुच्च्यत यद्दाक्षिणमा-सीत् ॥ १८ ॥ अथैभ्यः सूर्य्यं दक्षिणामानयन् । तं प्रत्य-गृह्णँस्तस्मादु ह स्माऽऽहुरङ्गिरसो वयं वा ऽआर्त्विजीनाः स्मो वयं दक्षिणीया ऽअपि वा ऽअस्माभिरेष प्प्रतिगृहीतो य ऽएष तपतीति तस्मात्सद्यः क्रियो*ऽश्वः श्वेतो दक्षिणा ॥ १९ ॥ तस्य† रुक्मः पुरस्ताद्भवति । तदेतस्य रूपं क्रियते य ऽएष तपति यद्यश्वᳪ श्वेतं न विन्देदपि गौरेव श्वेतः

---

* "यः कश्चाऽध्वानमश्नुवीताऽश्वः स वचनीयः स्यात्"

"अश्वः कस्मात् अश्नुतेऽध्वानं महाशनो भवतीति वा" इति यास्कोक्तेः ।

† 'स्वर्णनिर्मितं फलकाकारमाभरणविशेषं 'रुक्मम्' इत्युच्यते' ।

स्यात्तस्य रुक्मः पुरस्ताद् भवति तदेतस्य रूपं क्रियते य ऽएष तपति ॥ २० ॥ तेभ्यो ह वाक्चुक्रोध । केन मदेष श्रेयान्बन्धुना३केना३ यदेतं प्रत्यग्रहीष्ट न मामिति सा हैभ्योऽपचक्राम सोमयाऽनन्तरेण देवासुरान्त्सँस्यत्तान्त्सिꣳही भूत्वाऽऽददाना चचार तामुपैव देवा ऽअमन्त्रयन्तोपाऽसुरा ऽअग्निरेव देवानां दूत ऽआस सहरक्षाऽइत्यसुररक्षसमसुराणाꣳ ॥ २१ ॥ सा देवानुपाऽवर्त्स्यन्त्युवाच । यद्द ऽउपावर्त्तेय किं मे ततः स्यादिति पूर्वामेव त्वाऽग्नेराहुतिः प्राप्स्यसीत्यथ हैषा देवानुवाच यां मया काञ्चाऽऽशिषमाशासिष्यद्धे सा वः सर्व्वा समर्द्धिष्यतऽइति सैवं देवानुपाऽऽववर्त्त ॥ २२ ॥ स यद्धार्य्यमाणेऽग्नौ । उत्तरवेदिं व्याघारयति यदेवैनामदो देवा ऽअब्रुवन्पूर्वां त्वाऽग्नेराहुतिः प्राप्स्यतीति तदेवैनामेतत्पूर्वामग्नेराहुतिः प्राप्नोति वाग्ध्येषा निदानेनाऽथ यदुत्तरवेदिमुपकिरति यज्ञस्यैव सर्वत्वाय वाग्घि यज्ञो वागु ह्येषा ॥ २३ ॥ तां वै युगशम्म्येन विमिमीते । युगेन यत्र हरन्ति शम्म्यया यतो हरन्ति युगशम्म्येन वै योग्यं युञ्जन्ति सा यद्देवाऽदः सिꣳही भूत्वा शान्तेवाऽऽचरत्तदेवैनामेतद्यज्ञे युनक्ति ॥२४॥ तस्मान्निवृत्तदक्षिणां न प्रतिगृह्णीयात् । सिꣳही हैनं भूत्वा क्षिणोति नो हाऽमा कुर्वीत सिꣳही हैवैनं भूत्वा क्षिणोति नो हाऽन्यस्मै दद्याद्यज्ञं तदन्यत्राऽऽत्मनः कुर्वीत तस्माद्योऽस्याऽपि पाप ऽइव समानबन्धुः स्यात्तस्मा ऽएनां दद्यात्स यद्ददाति तदेनꣳ सिꣳही भूत्वा न क्षिणोति

यदु समानबन्धवे ददाति तदु नाऽन्यत्राऽऽत्मनः कुरुत ऽएषो निवृत्तदक्षिणायै प्प्रतिष्ठा ॥ २५ ॥ *अथ शम्म्या ञ्च स्फ्यञ्चाऽऽदत्ते । तद्य ऽएष पूर्व्वार्द्ध्यः उत्तरार्द्ध्यः शङ्कुर्ब्भवति तस्मात्प्रत्यङ् प्रक्रामति त्रीन्विक्रमाँस्तच्चात्वालं परिलिखति सा† चात्त्वालस्य मात्रा नाऽत्रमात्राऽस्ति यत्रैव स्वयं मनसा मन्न्येताऽग्रेणोत्करं तच्चात्वालं परिलिखेत् ॥ २६ ॥ स व्वेद्यन्तात् । उदीचीᳬ शम्म्यां निदधाति स परिलिखति 'तप्तायनी[1] मे ऽसी'तीमामेवैतदाहाऽस्याᳬ हि तप्त ऽएति ॥ २७ ॥ अथ पुरस्तात् । उदीचीᳬ शम्म्यां निदधाति स परिलिखति 'व्वित्तायनी[2] मेऽसी'तीमामेवैतदाहाऽस्याᳬ हि व्विविदान ऽएति ॥२८॥ अथाऽनु व्वेद्यन्तम् । प्राचीᳬ शम्म्यां निदधाति स परिलिख'त्त्यवतान्न्मा[3] नाथितादि'तीमामेवैतदाह यत्र नाऽथैतन्न्माऽवतादिति ॥ २९ ॥ अथोत्तरतः । प्प्राचीᳬ शम्म्यां निदधाति स परिलिख'त्त्यवतान्न्मा[4] व्व्यथितादि'ती मामेवैतदाह यत्र व्व्यथैतन्न्माऽवतादिति ॥ ३० ॥ अथ हरति । यत्र हरति तदग्नी दुपसीदति स वा ऽग्नीनामेव नामानि गृह्णन्हरति यान्न्वाऽअमून्देवा ऽअग्रेऽग्नीन् होत्राय प्प्राव्वृणत ते प्प्राऽधन्न्वँस्त-

* 'द्वात्रिंसदङ्गुलप्रमाणां सगर्त्तां वारणीं शम्याम्' का० श्रौ० सू० वृ० ( ५. ३. २० ) ।
'गदया समानाकारो व्यायामार्धपरिमितः काष्ठविशेषः शम्या' तै० सं० १. १. ६ ।
'गदया सदृशी बाहुपरिमिता शम्या' तै० ब्रा० ३. २. ६ ।

† 'उत्तरवेदि निचयार्थं यत्र भूप्रदेशे मृदं खनति स प्रदेशश्चात्वाल उच्यते' ।

(१) शु० सं० अ० ५ क० ९ । ( २ ) शु० सं० अ० ५ क० ९ । ( ३ ) शु० सं० अ० ५ क० ९ । ( ४ ) शु० सं० अ० ५ क० ९ ।

ऽइमा ऽएव पृथिवीरुपाऽसर्प्पन्निमामहैव द्वे ऽअस्याः परे तेनैवैतन्निदानेन हरति ॥ ३१ ॥ स प्रहरति । 'विदेदग्नि-र्न्नभो नामाऽग्ने ऽअङ्गिर ऽआयुना नाम्नेही'ति स यत्प्रा-ऽधन्न्वँस्तदायुर्द्धाति तत्समीरयति 'योऽस्यां पृथिव्यामसी'ति योऽस्यां पृथिव्यामसीति ह्रत्वा निदधाति 'यत्ते-ऽनाधृष्टं नाम यज्ञियं तेन त्वाऽऽदध' ऽइति यत्तेऽनाधृष्टꣳ रक्षोभिर्न्नाम यज्ञियं तेन त्वाऽऽदध ऽइत्येवैतदाहा'ऽनु त्वा देववीतय' ऽइति चतुर्त्थꣳ हरति देवेभ्यस्त्वा जुष्टाꣳ हरामीत्त्येवैतदाह तां वै चतुःस्रक्तेश्चात्त्वालाद्धरति चतस्रो वै दिशः सर्व्वाभ्य ऽएवैनामेतद्दिग्भ्यो हरति ॥ ३२ ॥ अथा*ऽनुव्यूहति । 'सिꣳह्यसि सपत्नसाही देवेभ्यः कल्पस्वे'ति सा यद्देवाऽदः सिꣳही भूत्त्वाऽशान्तेवाऽचरत्तदे-वैनामेतदाह सिꣳह्यसीति सपत्नसाहीति त्वया वयꣳ सपत्नान्न्पापीयसः क्रियास्मेत्त्येवैतदाह देवेभ्यः कल्पस्वेति योषा वा ऽउत्तरवेदिस्तामेवैतद्देवेभ्यः कल्पयति ॥ ३३ ॥ तां वै युगमात्रीं वा सर्व्वतः करोति । यजमानस्य वा दश-दश पदानि दशाक्षरा वै विराड्वाग्वै विराड्वाग्यज्ञो मध्ये नाभिकामिव करोति समानत्राऽऽसीनो व्याघारयाणीति ॥ ३४ ॥ तामद्भिरभ्युक्षति । सा यद्देवाऽदः सिꣳही भूत्त्वाऽशान्ते वाऽऽचरच्छान्तिरापस्तामद्भिः शमयति योषा

(१) शु० सं० अ० ५ क० ९। (२) शु० सं० अ० ५ क० ९। (३) शु० सं० अ० ५ क० ९। (४) शु० सं० अ० ५ क० ९। (५) शु० सं० अ० ५ क० १०।

* का० श्रौ० सू० ५. ३. ३२।

वा ऽउत्तरवेदिस्तामेवैतद्देवेभ्यो हिन्वति तस्मादद्भिरभ्युक्षति ॥ ३५ ॥ सोऽभ्युक्षति । '[1]सिᳫँहीरसि सपत्नसाही देवेभ्यः शुन्धस्वे'त्यथ सिकताभिरनुविकरत्यलङ्कारो न्वेव सिकता भ्राजन्त ऽइव हि सिकता ऽअग्नेर्वा ऽएतद्वैश्वानरस्य भस्म यत्सिकता ऽअग्निं वा ऽअस्यामाधास्यन्भवति तथो हैनामग्निर्न हिनस्ति तस्मात्सिकताभिरनु विकिरति सोऽनु विकिरति '[2]सिᳫँहीरसि सपत्नसाही देवेभ्यः शुम्भस्वे'त्यथैनां छादयति सा *च्छन्नैताᳫँ रात्रिं वसति ॥ ३६ ॥

पञ्चमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

[ अथाऽग्निप्रणयनादि ]

†इध्ममभ्यादधाति । उपयमनीरुपकल्पयन्त्याज्यमधिश्रयति स्रुवञ्च स्रुचञ्च सम्माष्ट्यथोत्पूयाऽऽज्यं पञ्चगृहीतं गृह्णीते यदा प्रदीप्त ऽइध्मो भवति ॥१॥ अथोद्यच्छन्तीध्मम् । उपयच्छन्त्युपयमनीरथाऽऽहाऽग्नये प्रह्रियमाणायाऽनुब्रूह्येकस्फ्ययाऽनूदेहीत्यनूदैति प्रतिप्रस्थातैकस्फ्ययैतस्मान्मध्यमाच्छङ्कोरुर्ध्व ऽएष वेदेर्जघनार्द्धे भवति तद्यद्देवाऽत्राऽन्तः पातेन गार्हपत्यस्य वेदेव्यवच्छिन्नं भवति तदेवैतदनुसन्तनोति ॥ २ ॥ तद्धैके । ओत्तरवेदेरनूदायन्ति तदु तथा न कुर्य्यादेवैतस्मान्मध्यमाच्छङ्कोरनूदेयात्त ऽआयन्त्यागच्छ-

(१) शु० सं० अ० ५ क० १०। (२) शु० सं० अ० ५ क० १०।

* का० श्रौ० सू० ५. ४. १।

† का० श्रौ० सू० ५. ४. २।

न्त्युत्तरवेदिम् ॥ ३ ॥ *प्रोक्षणीरध्वर्युरादत्ते । स पुरस्ताद्वाऽग्रे †प्प्रोक्षत्युदङ् तिष्ठ'न्निन्द्रघोषस्त्वा व्वसुभिः पुरस्तात्पात्वि'तीन्द्रघोषस्त्वा व्वसुभिः पुरस्ताद्गोपायत्वित्येवैतदाह ॥ ४ ॥ अथ पश्चात्प्रोक्षति । 'प्रचेतास्त्वा रुद्रैः पश्चात्पात्वि'ति प्प्रचेतास्त्वा रुद्रैः पश्चाद्गोपायत्वित्येवैतदाह ॥ ५ ॥ अथ दक्षिणतः प्प्रोक्षति । 'मनोजवास्त्वा पितृभिर्द्दक्षिणतः पात्वि'ति मनोजवास्त्वा पितृभिर्द्दक्षिणतो गोपायत्वित्येवैतदाह ॥ ६ ॥ ‡अथोत्तरतः प्प्रोक्षति । 'व्विश्वकर्म्मा त्वाऽऽदित्यैरुत्तरतः पात्वि'ति व्विश्वकर्म्मा त्वाऽऽदित्यैरुत्तरतो गोपायत्वित्येवैतदाह ॥ ७ ॥ अथ याः प्प्रोक्षण्यः पिरिशिष्यन्ते । तद्ये ऽएते पूर्वे स्रक्ती तयोर्या दक्षिणा तान्न्यन्तेन बहिर्वेदि निनय'तीदमहं तप्तं व्वार्वहिर्द्धा यज्ञान्निः सृजामी'ति सा यदेवाऽदः सिꣳही भूत्वाऽशान्ते वाऽचरत्तामेवाऽस्या ऽएतच्छुचं बहिर्द्धा यज्ञान्निः सृजति यदि नाऽभिचरेद्यद्यु ऽअभिचरेदादिशेदिदमहं तप्तं व्वारमुमभि निःसृजामीति तमेतया शुचा विद्ध्यति स शोचन्नेवाऽमुं लोकमेति ॥ ८ ॥ स यद्धार्यमाणेऽग्नौ । उत्तरवेदिं व्व्याघारयति यदेवैनामदो देवाऽअब्रुवन्पूर्वां त्वाऽग्नेराहुतिः प्प्राप्स्यतीति तदेवैनामेतत्पू-

* अत्र शतम् १८०० ॥
† का॰ श्रौ॰ सू॰ ५. ४. ९–१० ।
‡ का॰ का॰ श्रौ॰ सू॰ ५. ४. ११ ।

(१) शु॰ सं॰ अ॰ ५ क॰ ११ । (२) शु॰ सं॰ अ॰ ५ क॰ ११ । (३) शु॰ सं॰ अ॰ ५ क॰ ११ । (४) शु॰ सं॰ अ॰ ५ क॰ ११ । (५) शु॰ सं॰ अ॰ ५ क॰ ११ ।

र्वामग्नेराहुतिः प्प्राप्नोति यद्वेषा देवानब्रवीद्यां मया काञ्चा-ऽऽशिषमाशासिष्यद्ध्वे सा वः सर्वा समर्द्धिष्यत ऽइति तामेनयाऽत्रार्त्विजो यजमानायाऽऽशिषमाशासते साऽस्मै सर्वा समृद्ध्यते ॥ ९ ॥ तद्वा ऽएतदेकं कुर्वन्द्वयं करोति । यदुत्तरवेदिं व्याघारयत्यथ यैषां मध्येऽनाभिकेव भवति तस्यै ये पूर्वे स्त्रक्ती तयोरन्या दक्षिणा ॥ १० ॥ तस्यामाघा-यति । 'सिꣳह्यसि स्वाहे'त्यथाऽपरयोरुत्तरस्याꣳ 'सिꣳह्य[2]-स्याऽऽदित्यवनिः स्वाहे'त्यथाऽपरयोर्दक्षिणस्याꣳ 'सिꣳ-ह्य[3]सि ब्रह्मवनिः क्षत्रवनिः स्वाहे'ति बह्वी वै यजुःष्वाशीस्तद् ब्रह्म च क्षत्रं चाऽऽशास्त ऽउभे वीर्ये ॥ ११ ॥ अथ *पूर्व-योरुत्तरस्याꣳ । 'सिꣳह्यसि सुप्प्रजावनी रायस्पोषवनिः स्वाहे'ति तत्प्रजामाशास्ते यदाह सुप्प्रजावनिरिति रायस्प्पो-षवनिरिति भूमा वै रायस्प्पोषस्तद्भूमानमाशास्ते ॥ १२ ॥ अथ मध्य ऽआघारयति । 'सिꣳह्यस्यावह देवान्यजमानाय स्वाहे'ति तद्देवान्यजमानायाऽऽवहयत्यथ स्त्रुचमुद्यच्छति 'भूते[6]भ्यस्त्वेति' प्प्रजा वै भूतानि प्प्रजाभ्यस्त्वेत्ये वै तदाह ॥ १३ ॥ अथ †परिधीन्परिधाति । 'ध्रुवो[7][8]ऽसि पृथिवीं दृꣳ-हे'ति मध्यमं 'ध्रुवक्षिदस्यन्तरिक्षं दृꣳहे'ति दक्षिण'मच्च्यु-

(१) शु० सं० अ० ५ क० १२ । (२) शु० सं० अ० ५ क० १२ । (३) शु० सं० अ० ५ क० १२ । (४) शु० सं० अ० ५ क० १२ । ( ५ ) शु० सं० अ० ५ क० १२ । ( ६ ) शु० सं० अ० ५ क० १२ । ( ७ ) शु० सं० अ० ५ क० १३ । (८) शु० सं० अ० ५ क० १३ ।

* का० श्रौ० सू० ५. ४. १२–१३ ।

† का० श्रौ० सू० ५. ४. १४ ।

तंक्षिदसि दिवं दृꣳहे'त्युत्तर'मग्नेः पुरीषमसी'ति * सम्भारानुपनिवपति तद्यत्सम्भारा भवन्त्यग्नेरेव सर्वत्त्वाय ॥ १४ ॥ शरीरꣳ हैवाऽस्य । पीतुदारु तद्यत्पैतु दारवाः परिधयो भवन्ति शरीरेणै वैनमेतत्समर्द्धयति कृत्स्नं करोति ॥ १५॥ माꣳसꣳ हैवाऽस्य गुल्गुलु । तद्यद् गुल्गुलु भवति माꣳसेनैवैनमेतत्समर्द्धयति कृत्स्नं करोति ॥ १६ ॥ गन्धोहैवाऽस्य सुगन्धितेजनम् । तद्यत्सुगन्धितेजनं भवति गन्धेनैवैनमेतत्समर्द्धयति कृत्स्नं करोति ॥ १७ ॥ अथ यद्वृष्णेस्तुका भवति । यद्वृष्णेर्ह वै विषाणे ऽअन्तरेणाऽग्निरेकाꣳ रात्रिमुवास तद्यदेवाऽत्राऽग्नेर्न्यक्तं तदिहाऽप्यसदिति तस्माद्वृष्णेस्तुका भवति तस्माद्या शीर्ष्णो नेदिष्ठꣳ स्यात्तामाच्छिद्याऽऽहरेद्यद्यु तां न विन्देदपि यामेव काञ्चाऽऽहरेत्तद्यत्परिधयो भवन्ति गुप्त्या ऽएव दूर ऽइव ह्येनमुत्तरे परिधय ऽआगच्छन्ति ॥१८॥ (A)

पञ्चमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥



[ सदोहविर्धाननिर्माणादि ]

पुरुषो वै यज्ञः । पुरुषस्तेन यज्ञो यदेनं पुरुषस्तनुत ऽएष वै तायमानो यावानेव पुरुषस्तावान्विधीयते तस्मात्पुरुषो

(१) शु० सं० अ० ५ क० १३ । (२) शु० सं० अ० ५ क० १३ ।

* का० श्रौ० सू० ५. ४. १५ ।

(A) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—

कपि० सं० ३९. ३. ४; का० सं० २५. ६; मै० सं० ३. ८. ५; तै० सं० ६. २. ८; काण्व० शत० ४. ५. २ ।

यज्ञः ॥ १ ॥ शिर ऽएवाऽस्य हविर्द्धानम् । वैष्णवं देवतयाऽथ यदस्मिन्त्सोमो भवति हविर्वै देवानाᳬ सोमस्तस्माद्धविर्द्धानं नाम ॥ २ ॥ [ काण्डस्यार्धम् ॥ ४३० ॥ ] मुखमेवाऽस्याऽऽहवनीयः । स यदा हवनीये जुहोति यथा मुख ऽआसिञ्चेदेवं तत् ॥ ३ ॥ स्तुप ऽएवाऽस्य यूपः । बाहू ऽएवाऽस्याऽऽग्नीध्रीयश्च मार्ज्जालीयश्च ॥ ४ ॥ उदरमेवाऽस्य सदः । तस्मात्सदसि भक्षयन्ति यद्धीदं किञ्चाऽश्नन्त्युदर ऽएवेदᳬ सर्वं प्रतितिष्ठत्यथ यदस्मिन्विश्वे देवा ऽअसीदँस्तस्मात्सदो नाम त ऽउ ऽएवाऽस्मिन्नेते ब्राह्मणा विश्वगोत्राः सीदन्ति ॥ ५ ॥ अथ यावेतौ जघनेनाऽग्नी । पादावेवाऽस्यैतावेष वै तायमानो यावानेव पुरुषस्तावान्विधीयते तस्मात्पुरुषो यज्ञः ॥ ६ ॥ *उभयतोद्वारᳬ हविर्द्धानं भवति । उभयतोद्वारᳬ सदस्तस्मादयं पुरुष ऽआन्तᳬ सन्तृण्णः प्प्रणिक्ते हविर्द्धाने † ऽउपतिष्ठते ॥ ७ ॥ ते समववर्त्तयन्ति । दक्षिणेनैव दक्षिणमुत्तरेणोत्तरं यद्वर्षीयस्तद्दक्षिणᳬ स्यात् ॥ ८ ॥ ‡ तयोः समववृत्तयोः । छदिरधि निदधाति यदि छदिर्न्न विन्देयुश्छदिः सम्मितां ‡‡वा भित्तिं प्रत्यानह्यन्ति रराट्यां परिश्रयन्त्युच्छ्रायीभ्यां छदिः पश्चादधि निदधाति छदिः सम्मितां वा भित्तिम् ॥ ९ ॥ अथ पुनः प्प्रपद्य । $ चतुर्ग्गृहीतमाज्यं गृहीत्वा सावित्रं

* पृष्ठ्यामुभयतो द्वार्ये ( ८. ५. २५ ) का० श्रौ० सू० ।
† 'उपतिष्ठेते' इति 'क' पुस्तके ।
‡ का० श्रौ० सू० ८. ३. २०–२४ ।
‡‡ 'वा भित्तिं' इत्यत्र 'वा' इति पदम् 'क. ख. ग' पुस्तकेषु नास्ति ।
$ का० श्रौ० सू० ८. ३. २५ ।

प्रसवाय जुहोति सविता वै देवानां प्रसविता [$]सवितृ-प्प्रसूताय यज्ञं तनवामहा ऽइति तस्मात्सावित्रं जुहोति ॥१०॥ स जुहोति। 'युञ्जते[1] मन ऽउत युञ्जते धिय' ऽइति मनसा च वै वाचा च यज्ञं तन्वते स यदाह युञ्जते मन ऽइति तन्मनो युनक्त्युत युञ्जते धिय ऽइति तद्वाचं युनक्ति धिया—धिया ह्येतया मनुष्या जुज्यूषन्त्यनूक्तेनेव प्प्रकामो-द्येनेव गाथाभिरिव ताभ्यां युक्ताभ्यां यज्ञं तन्वते ॥ ११ ॥ 'विप्रा[2] विप्प्रस्य बृहतो विपश्चित' ऽइति। ये वै ब्राह्मणाः शुश्रुवाᳬसोऽनूचानास्ते विप्प्रास्तानेवैतदभ्याह बृहतो विपश्चित ऽइति यज्ञो वै बृहद्विपश्चिच्चद्यज्ञमेवैतदभ्याह 'वि होत्रा[3] दधे वयुना विदेक ऽइदि'ति वि हि होत्रा दधते यज्ञं तन्वाना 'मही[4] देवस्य सवितुः परिष्टुतिः स्वाहे'ति तत्सा-वित्रं प्रसवाय जुहोति ॥१२॥ [ अर्धप्रपाठकः ॥६६॥ ] अथाऽपरं चतुर्गृहीतमाज्यं गृहीत्वा। उपनिष्क्रामति दक्षिणया द्वारा पत्नीं [*] निष्क्रामयन्ति स दक्षिणस्य [†] हविर्द्धानस्य दक्षि-णायां वर्त्तन्याᳬ हिरण्यं निधाय जुहो'तीदं[5] विष्णुर्विचक्रमे त्रेधा निदधे पदम्। समूढमस्य पाᳬसुरे स्वाहे'ति सᳬस्रवं पत्न्यै पाणावानयति साक्षस्य सन्तापमुपाऽनक्ति 'देवश्रुतौ[6] देवेष्वाघोषतमि'ति प्प्रयच्छति प्प्रातिप्प्रस्थात्रे स्रुचं चा-

(१) शु० सं० अ० ५ क० १४। (२) शु० सं० अ० ५ कं० १४। (३) शु० सं० अ० ५ क० १४। (४) शु० सं० अ० ५ क० १४। (५) शु० सं० अ० ५ क० १५। (६) शु० सं० अ० ५ क० १६।

$ 'क' पुस्तके 'सवितृप्रसूता' इति।

* 'निष्क्रमयन्ति' इति 'क' पुस्तके।

† का० श्रौ० सू० ८. ३. २७।

ऽऽज्यविलापनीञ्च पर्य्यग्गणयन्ति पत्नीमुभौ जघनेनाऽग्नी ॥१३॥ चतुर्ग्गृहीतमाज्यं गृहीत्वा । प्रतिप्प्रस्थातोत्तरस्य हविर्द्धानस्य दक्षिणायां वर्त्तन्याᳫं हिरण्यं निधाय जुहो'[१]तीरावती धेनुमती हि भूतᳪं सूयवसिनी मनवे दशस्या । [२]व्यस्कभ्ना रोदसी विष्णवेते दाधर्त्थ पृथिवीमभितो मयूखैᳪं स्वाहे'ति सᳫंस्रवं पत्न्यै पाणावानयति * साक्षस्य सन्तापमुपाऽनक्ति '[३]देवश्रुतौ देवेष्वाघोषतमि'ति तद्यदेवं जुहोति ॥ १४ ॥ देवा ह वै यज्ञं तन्वानाᳪं । तेऽसुर रक्षसेभ्यऽआसङ्गाद्बिभयाञ्चक्रुर्व्वज्ज्रो वा ऽआज्यन्त ऽएतेन व्वज्ज्रेणाऽऽज्येन दक्षिणतो नाष्ट्रा रक्षाᳫंस्यपवाऽघ्नँस्तथैषां नियानं नाऽन्ववायँस्तथो ऽएवैष ऽएतेन व्वज्ज्रेणाऽऽज्येन दक्षिणतो नाष्ट्रा रक्षाᳫंस्यपहन्ति तथाऽस्य नियानं नाऽन्ववयन्ति तद्यद्वैष्णवीभ्यामृग्भ्यां जुहोति वैष्णवᳪं हि हविर्द्धानम् ॥ १५ ॥ अथ यत्पत्न्यक्षस्य सन्तापमुपाऽनक्ति । प्प्रजननमेवैतत्क्रियते यदा वै स्त्रियै च पुᳪंसश्च्च सन्तप्प्यतेऽथ रेतᳪं सिच्च्यते तत्ततᳪं प्प्रजायते परागुपाऽनक्ति पराग्घ्येव रेतᳪं सिच्च्यतेऽथाऽऽह हविर्द्धानाभ्यां प्रवर्त्त्यमानाभ्यामनुब्रूहीति ॥ १६ ॥ अथ †वाचयति । '[४]प्प्राची प्प्रेतमध्वरं कल्पयन्ती' ऽइत्यध्वरो वै यज्ञᳪं प्प्राची प्प्रेतं यज्ञं कल्पयन्तीऽइत्ये वै तदा'होर्द्ध्वं यज्ञं नयतं मा जिह्वरतमि'त्यूर्द्ध्वमिमं

(१) शु० सं० अ० ५ क० १६। (२) शु० सं० अ० ५ क० १७। (३) शु० सं० अ० ५ क० १७। (४) शु० सं० अ० ५ क० १७।

* का० श्रौ० सू० ८. ३. २८–३।

† का० श्रौ० सू० ८. ४. १–३।

यज्ञं देवलोकं नयतमित्त्येवै तदाह मा जिह्वरतमिति तदे-तस्मा ऽअह्वलामाशास्ते समुद्रगृह्येव प्प्रवर्त्तयेयुर्य्यथा नोत्त्स-र्ज्जेतामसुर्य्या वा ऽएषा वाग्याक्षे नेदिहाऽसुर्य्या वाग्वदादिति यद्युत्त्सर्ज्जेताम् ॥ १७ ॥ एतद्वाचयेत् । * 'स्वं गोष्ठमावदतं देवी दुर्य्ये ऽआयुर्म्मा निर्व्वादिष्ट्टं प्रजां मा निर्व्वादिष्ट्टमि'ति तस्यो हैषा प्प्रायश्चित्तिः ॥ १८ ॥ तदाहुः । उत्तरवेदेः प्प्रत्त्यङ् प्रक्रामेत्त्रीन्विक्रमाँस्तद्धविर्द्धाने स्त्थापयेत्त्सा हवि-र्द्धानयोर्म्मात्त्रेति नाऽत्र मात्राऽस्ति यत्रैव स्वयं मनसा मन्न्येत नाहैव सत्राऽऽत्त्यन्तिके नोदूरे तत्त्स्त्था-पयेत् ॥ १९ ॥ ते ऽअभिमन्त्रयते । 'अत्र रमेथां व्वर्ष्मन्न्पृथिव्व्या' ऽइति व्वर्ष्म ह्येतत्त्पृथिव्व्यै भवति दिवि ह्यस्याऽऽहवनीयो भवति नभ्यस्त्थे करोति तद्धि क्षेमस्य रूपम् ॥ २० ॥ अथोत्तरेण परर्य्येत्त्याऽद्ध्वर्य्युः । दक्षिणः †हविर्द्धानमुपस्तभ्नाति 'व्विष्णोर्न्नु कं व्वीर्य्याणि प्प्रवोचं यः पार्त्थिवानि व्विममे रजाᳲसि । यो ऽअस्कभायदुत्तरः सधस्त्थं व्विचक्रमाणस्त्रेधोरुगायो व्विष्णवेत्त्वे'ति मेथीमुप-निहन्तीतरतस्ततो यदु च मानुषे ॥ २१ ॥ ‡अथ प्प्रति-प्प्रस्त्थाता । उत्तरः हविर्द्धानमुपस्तभ्नाति 'दिवो वा व्विष्ण-ऽउतवा पृथिव्व्या महो वा व्विष्ण ऽउरोरन्तरिक्षात् । उभा

* का० श्रौ० सू० ८. ४. ४–५।

† का० श्रौ० सू० ८. ४. ६–७।

‡ का० श्रौ० सू० ८. ४. ८।

(१) शु० सं० अ० ५ क० १७। (२) शु० सं० अ० ५ क० १७। (३) शु० सं० अ० ५ क० १८। (४) शु० सं० अ० ५ क० १९।

हि हस्ता वसुना पृणस्वा प्रयच्छ दक्षिणादोत सव्याद्विष्णवे त्वे'ति मेथीमुपनिहन्तीतरतस्ततो यदु च मानुषे तद्यद्वैष्णवैर्य्यजुर्भिरुपचरन्ति वैष्णवꣳ हि हविर्द्धानम् ॥२२॥ अथ * मध्यमं छदिरुपस्पृश्य वाचयति । 'प्रतद्विष्णुस्तवते[1] वीर्य्येण मृगो न भीमः कुचरो गिरिष्ठाः । यस्योरुषु त्रिषु विक्रमणेष्वधिक्षियन्ति भुवनानि विश्वे'तीदꣳ है वाऽस्यै तच्छीर्षकपालं यदिदमुपरिष्टाद्धीव ह्येतत्क्षियन्त्यन्यानि शीर्षकपालानि तस्मादाहाऽधिक्षियन्तीति ॥ २३ ॥ अथ †रराट्यामुपस्पृश्य वाचयति । 'विष्णो[2] रराटमसी'ति ललाटꣳ हैवाऽस्यै तदथोच्छ्रुया ऽउपस्पृश्य वाचयति 'विष्णोः[3] श्नप्त्रे स्थ' ऽइति सृक्के हैवाऽस्यैते ऽअथ यदिदं पश्चाच्छदिर्भवतीदꣳ हैवाऽस्यै तच्छीर्षकपालं यदिदं पश्चात् ॥ २४ ॥ अथ लस्पूजन्या स्पन्द्यया प्रसीव्यति । 'विष्णोः[4] स्यूरसी'त्यथ ग्रन्थिं करोति 'विष्णोर्ध्रुवोऽसी'ति नेदव्यवपद्याता ऽइति तं प्रकृते कर्म्मन्न्विष्यति तथोहाऽध्वर्युं वा यजमानं वा ग्राहो न विन्दति तन्निष्ठितमभिमृशति वैष्णवमसीति वैष्णवꣳ हि हविर्द्धानम् ॥ २५ ॥ (B)

पञ्चमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

---

* का० श्रौ० सू० ८. ४. १३।

† का० श्रौ० सू० ८. ४. १३–२३।

(B) एतद्ब्राह्मणस्था विषया अन्यत्राप्युपलभ्यन्ते यथा—

का० श० ६. २. ९; मै० सं० ३. ८. ७; काठ० सं० २५. ८; कपि० सं० ४. १।

(१) शु० सं० अ० ५ क० २०। (२) शु० सं० अ० ५ २१। (३) शु० सं० अ० ५ क० २१। (४) शु० सं० अ० ५ क० २१।

[ *उपरवनिर्माणम् ]

इयं व्वा ऽअब्भ्युपरवाः † खायन्ते । शिरो वै यज्ञस्य हविर्द्धानं तद्य ऽइमे शीर्षंश्चत्वारः कूपा ऽइमावह द्वाविमौ द्वौ तानेवै तत्करोति तस्मादुपरवान्न्खनति ॥ १ ॥ देवाश्च्च वा ऽअसुराश्च्च । उभये प्प्राजापत्त्याः पस्प्पृधिरे । ततोऽसुरा ऽएषु लोकेषु कृत्त्यां व्वलगान्निचख्नुरुतैवश्चिद्देवानभिभवेमेति ॥ २ ॥ तद्वै देवा ऽअस्प्पृण्ण्वत । त ऽएतैः ‡कृत्त्यां व्वलगानुदखनन्न्यदा वै कृत्त्यामुत्खनन्त्यथ सालसा मोघा भवति तथो ऽएवैष ऽएतद्यद्यस्मा ऽअत्र कश्चिद्द्विषन् भ्भ्रातृव्व्यः कृत्त्यां व्वलगान्निखनति तानेवैतदुत्किरति तस्मादुपरवान्खनति स दक्षिणस्य हविर्द्धानस्याऽधोऽधः प्र ऽउगं खनति ॥ ३ ॥ $सोऽब्भ्रिमादत्ते । 'देवस्य[1] त्वा सवितुः प्प्रसवेऽश्विनो र्बाहुब्भ्यां पूष्णो हस्ताब्भ्यामाददे नार्य्यसी'ति समान ऽएतस्य यजुषो बन्धुर्य्योषा वा ऽएषा यदब्भ्रिस्तस्मादाह नार्य्यसीति ॥ ४ ॥ तान्न्प्रादेशमात्रं विना परिलिखति । 'इदमहꣳ[2] रक्षसां ग्रीवा ऽअपि कृन्ता-

* उपरवा नाम कूपकाः, तेषामुपरि अधिषवणफलके निधीयेते तयोरुपरि अधिषवणचर्म, तत्र सोमोऽभिषूयते, तस्मिन्ग्रावभिर्हन्यमाने वादित्रोदरवत् सुषिरास्ते कूपा गम्भीरमुपरवन्तीत्युपरवा इत्यभिधीयन्ते इति **याज्ञिकदेवः** ।

† 'ख्यायन्ते' इति 'च' पुस्तके ।

‡ **कृत्यामिति,** पराजयं प्राप्य पलायमानैरसुरैः इन्द्रादिवधार्थमभिचाररूपेण भूमौ निखाता अस्थि-केश-नखादिपदार्थाः कृत्याविशेषाः **वलगाः** । वलगो वृणोतेः, इति **यास्कः** । ( ६. २.)

$ का० श्रौ० सू० ८. ४. १६ ।

( १ ) शु० सं० अ० ५ क० २२ । ( २ ) शु० सं० अ० ५ क० २२ ।

मी'ति व्वज्रो वा ऽअभ्रिर्व्वज्रेणैवैतन्नाष्ट्राणाᳩं रक्षसां ग्रीवाऽअपि कृन्तति ॥ ५ ॥ तद्यावेतौ पूर्व्वौ । तयोर्द्दक्षिणमेवाऽग्रे परिलिखेदथाऽपरयोरुत्तरमथाऽपरयोर्द्दक्षिणमथ पूर्व्वयोरुत्तरम् ॥ ६ ॥ अथो ऽइतरथाऽऽहुः । अपरयोरेवाऽग्र ऽउत्तरं परिलिखेदथ पूर्व्वयोर्द्दक्षिणमथाऽपरयोर्द्दक्षिणमथ पूर्व्वयोरुत्तरमित्यथो ऽअपि समीच ऽएव परिलिखेदेतन्न्वेवोत्तमं परिलिखेद्य ऽएष पूर्व्वयोरुत्तरो भवति ॥ ७ ॥ तान्न्यथाऽपरिलिखतमेव यथापूर्व्वं खनति । 'बृहन्नसि बृहद्रवा' ऽइत्युपस्तौत्येवैनानेतन्महयत्त्येव यदाह बृहन्नसि बृहद्रवा ऽइति 'बृहतीमिन्द्राय व्वाचं व्वदे'तीन्द्रो वै यज्ञस्य देवता व्वैष्णवꣳ हविर्द्धानं तत्सेन्द्रं करोति तस्मादाह बृहतीमिन्द्राय व्वाचं व्वदेति ॥ ८ ॥* 'रक्षोहणं व्वलगहनमि'ति । रक्षसाᳩं ह्येते व्वलगानां व्वधाय खायन्ते 'व्वैष्णवीमि'ति व्वैष्णवी हि हविर्द्धाने व्वाक् ॥९॥ तान्न्यथाखातमेवोत्किरति। 'इदमहं तं व्वलगमुत्किरामि यम्मे निष्ट्यो यममात्यो निचखाने'ति निष्ट्यो वा वा ऽअमात्यो वा कृत्त्यां वलगान्निखनति तानेवैतदुत्किरति ॥१०॥ 'इदमहं तं व्वलगमुत्किरामि । यम्मे समानो यमसमानो निचखाने'ति समानो वा वा ऽअसमानो वा कृत्त्यां व्वलगान्निखनति तानेवैतदुत्किरति ॥ ११ ॥

* का० श्रौ० सू० ८. ५. १–८ ।

(१) शु० सं० अ० ५ क० २२। (२) शु० सं० अ० ५ क० २२। (३) शु० सं० अ० ५ क० २२। (४) शु० सं० अ० ५ क० २३। (५) शु० सं० अ० ५ क० २३। (६) शु० सं० अ० ५ क० २३।

'इदमहं तं वलगमुत्किरामि । यम्मे सबन्धुर्य्यमसबन्धुर्न्निच-
खाने'ति सबन्धुर्वा वा ऽअसबन्धुर्वा कृत्यां वलगान्निखनति
तानेवैतदुत्किरति ॥ १२ ॥ 'इदमहं तं वलगमुत्किरामि यम्मे
सजातो यमसजातो निचखाने'ति सजातो वा वा ऽअसजातो
वा कृत्यां वलगान्निखनति तानेवैतदुत्किर'त्युत्कृत्यां कि-
रामी'त्यन्तत ऽउद्वपति तत्कृत्यामुत्किरति ॥ १३ ॥ तान्वा-
हुमात्रान्न्खनेत् । अन्तो वा ऽएषोऽन्तेनैवैतत्कृत्यां मोहयति
तानक्ष्णया सन्तृन्दन्ति यद्यक्ष्णया न शक्नुयादपि समीचस्त-
स्मादिमे प्प्राणाः परः सन्तृण्णाः ॥ १४ ॥ तान्यथा खात-
मेवाऽवमर्शयति । * 'स्वराडसि सपत्नहा सत्रराडस्यभिमा-
तिहा जनराडसि रक्षोहा सर्व्वराडस्य मित्रहे'त्याशीरेवैषैतस्य
कर्म्मण ऽआशिषमेवैतदाशास्ते ॥ १५ ॥ अथाऽध्वर्य्युश्च
यजमानश्च सम्मृशेते । पूर्व्वयोर्द्दक्षिणेऽध्वर्य्युर्भ्भवत्यपरयो-
रुत्तरे यजमानः सोऽध्वर्य्युः पृच्छति यजमान किमत्रेति
भद्रमित्याह तन्नौ सहेत्युपांश्वध्वर्य्युः ॥ १६ ॥ अथा-
ऽपरयोर्द्दक्षिणेऽध्वर्य्युर्भ्भवति । पूर्व्वयोरुत्तरे यजमानः स
यजमानः पृच्छत्यध्वर्य्यो किमत्रेति भद्रमित्याह तन्मम ऽइति
यजमानस्तद्यदेवꣳ सम्मृशेते प्प्राणानेवैतत्सयुजः कुरुत-
स्तस्मादिमे प्प्राणाः परः संविदेऽथ यत्पृष्टो भद्रमिति
प्प्रत्याह कल्याणमेवैतन्मानुष्यै व्वाचो वदति तस्मात्पृष्टो

* का० श्रौ० सू० ८. ५. १३ ।

( १ ) शु० सं० अ० ५ क० २३ । ( २ ) शु० सं० अ० ५ क० २३ । ( ३ ) शु० सं० अ० ५ क० २३ । ( ४ ) शु० सं० अ० ५ क० २४ ।

भद्रमिति प्प्रत्याहाऽथ प्प्रोक्षत्त्येको वै प्प्रोक्षणस्य बन्धु-र्म्मेध्यानेवैतत्त्करोति ॥ १७ ॥ स प्प्रोक्षति । 'रक्षो[1] हणो वो वलगहन' ऽइति रक्षोहणो ह्येते वलगहनो ह्येते 'प्प्रोक्षामि[2] वैष्णवानी'ति वैष्णवा ह्येते ॥ १८ ॥ अथ याः प्प्रोक्षण्ण्यः परिशिष्यन्ते । ता ऽअवटेष्ववनयति तद्या ऽइमाः प्प्राणेष्वा-पस्ता ऽएवैतद्दधाति तस्मादेषु प्प्राणेष्विमा ऽआपः ॥ १९ ॥ सोऽवनयति 'रक्षोहणो[3] वो वलगहनोऽवनयामि वैष्णवा नी'त्त्यथ बर्हीᳫंषि प्प्राचीनाग्राणि चोदीचीनाग्राणि चाऽव-स्तृणाति तद्यानीमानी प्प्राणेषु लोमानि तान्न्येवै तद्दधाति तस्मादेषु प्प्राणेष्विमानि लोमानि ॥ २० ॥ सोऽवस्तृ-णाति । 'रक्षोहणो[4] वो वलगहनोऽवस्तृणामि वैष्णवा-नी'त्त्यथ बर्हीᳫंषि तनूनीवोपरिष्टात्प्रच्छादयति केशा हैवाऽस्यैते ॥ २१ ॥ अथाऽधिषवणे* फलके ऽउपदधाति । 'रक्षोहणौ[5] वां वलगहना ऽउपदधामि वैष्णवी' ऽइति हनू हैवाऽस्यै ते ऽअथ पर्य्यूहति 'रक्षोहणौ[6] वां वलगहनौ पर्य्यूहामि वैष्णवी' ऽइति दृᳫंहत्त्येवैने ऽएतदशिथिले करोति ॥ २२ ॥ अथाऽधिषवणं परिकृत्तं भवति । सर्व्वं[7] रोहितं जिह्वा है वाऽस्यैषा तद्यत्त्सर्व्वरोहितं भवति लोहि-नीव हीयं जिह्वा तन्निदधाति 'वैष्णवमसी'ति वैष्णवᳫं

(१) शु० सं० अ० ५ क० २५। (२) शु० सं० अ० ५ क० २५। (३) शु० सं० अ० ५ क० २५। (४) शु० सं० अ० ५ क० २५। (५) शु० सं० अ० ५ क० २५। (६) शु० सं० अ० ५ क० २५। (७) शु० सं० अ० ५ क० २५।

* का० श्रौ० सू० ८. ५. २२-३३। ययोः फलकयोरुपरि सोमोऽभिषूयते ते द्वे अधिष-वणफलके इत्यर्थः।

ह्येतत् ॥ २३ ॥ अथ ग्राव्ण उपाऽवहरति । दन्ता हैवाऽस्य ग्रावाणस्तद्यद् ग्रावभिरभिषुण्वन्ति यथा दद्भिः प्प्सायादेवं तत्तान्निदधाति 'वैष्णवा स्थे'ति वैष्णवा ह्येत ऽएतदु यज्ञस्य शिरः *सꣳस्कृतम् ॥ २४ ॥(C)

पञ्चमाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

इति पञ्चमोऽध्यायः ॥ ५ ॥



[ सदस्यौदुम्बरीनिखननम् ]

†उदरमेवाऽस्य सदः । तस्मात्सदसि भक्षयन्ति यद्धीदं किञ्चाऽश्नन्त्युदर ऽएवेदꣳ सर्वं प्रतितिष्ठत्यथ यदस्मिन्न्विश्वे देवा ऽअसीदँस्तस्मात्सदो नाम त ऽउ ऽएवाऽस्मिन्नेते ब्राह्मणा विश्वगोत्राः सीदन्त्यैन्द्रं देवतया ॥१॥ तन्मद्ध्यऽऔदुम्बरीं मिनोति । अन्नं वा ऽऊर्ग्गुदुम्बर ऽउदरमेवाऽस्य सदस्तन्मद्ध्यतोऽन्नाद्यं दधाति तस्मान्मद्ध्य ऽऔदुम्बरीं मिनोति ॥२॥ अथ य ऽएष मध्यमः शङ्कुर्भवति । वेदेर्ज्जघनार्द्धे तस्मात्प्राङ् प्रक्रामति षड्विक्रमान्दक्षिणा सप्तममपक्रामति सम्पदः कामाय तदवटं परिलिखति ॥ ३ ॥ सोऽभ्रिमादत्ते । 'देवस्य त्वा(१) सवितुः प्प्रसवेऽश्विनोर्ब्बाहुभ्यां पूष्णो हस्ताभ्यामाददे नार्य्यसी'ति समान ऽएतस्य यजुषो

* 'क' पुस्तके 'संस्कृतम्' इति ।

(C) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—
काण्वश० ४. ५. ४; का० सं० २५. ९; तै० सं० ६. २. १०-११; ।

† का० श्रौ० स० ८. ६. १-६ ।

(१) शु० सं० अ० ५ क० २५ । (२) शु० सं० अ० ५ क० २६ ।

बन्धुरूर्ग्घोषो वा ऽएषा यदुभ्भिस्तस्मादाह नार्ग्यसीति ॥ ४ ॥ अथाऽवटं परिलिखति । 'इदमहꣳ रक्षसां ग्रीवा ऽअपि कृन्तामी'ति वज्ज्रो वा ऽअभ्रिर्व्वज्ज्रेणैवैतन्नाष्ट्राणाꣳ रक्षसां ग्रीवा ऽअपिकृन्तति ॥ ५ ॥ अथ खनति । प्राञ्चमुत्करमुत्किरति यजमानेन सम्मायौदुम्बरीं परिवासयति तामग्रेण प्प्राचीं निदधात्येतावन्मात्राणि बर्हीꣳष्युपरिष्टादधि निदधाति ॥ ६ ॥ अथ यवमत्यः प्प्रोक्षण्यो भवन्ति । आपो ह वा ऽओषधीनाꣳ रसस्तस्माद्दोषधयः 'केवल्यः खादिता न धिन्न्वन्त्योषधय ऽउ हाऽपाꣳ रसस्तस्माद्दापः पीताः केवल्यो न धिन्न्वन्ति यदैवोभय्यः सꣳसृष्टा भवन्त्यथैव धिन्न्वन्ति तर्हि हि सरसा भवन्ति सरसाभिः प्प्रोक्षाणीति ॥७॥ देवाश्च वा ऽअसुराश्च । उभये प्प्राजापत्याः पस्प्पृधिरे ततो देवेभ्यः सर्व्वा ऽएवौषधय ऽईयुरूर्य्यवा हैवैभ्यो नेयुः ॥ ८ ॥ तद्वै देवा ऽअस्प्पृण्वत । त ऽएतैः सर्व्वाः सपत्नानामोषधीरयुवत यदयुवत तस्माद्यवा नाम ॥ ९ ॥ ते होचुः । हन्त यः सर्व्वासामोषधीनाꣳ रसस्तं यवेषु दधामेति स यः सर्व्वासामोषधीनाꣳ रस ऽआसीत्तं यवेष्वदधुस्तस्माद्यत्राऽन्या ऽओषधयो म्म्लायन्ति तदेते मोदमाना वर्द्धन्त ऽएवꣳ ह्येषु रसमदधुस्तथो ऽएवैष ऽएतैः सर्व्वाः सपत्नानामोषधीर्युते तस्माद्यवमत्यः प्प्रोक्षण्यो भवन्ति ॥ १० ॥ स * यवानावपति । 'यवोऽसि यव-

* का० श्रौ० सू० ६. २. १५ ।

( १ ) शु० सं० अ० अ० ५ क० २६ । ( २ ) शु० सं० अ० ५ क० २६ ।

याऽस्मद्द्वेषो यवयाऽरातीरि'ति नाऽत्र तिरोहित मिवाऽस्त्यथ प्प्रोक्षत्त्येको वै प्प्रोक्षणस्य बन्धुर्म्मेद्ध्यामेवैतत्करोति ॥ ११ ॥ स *प्प्रोक्षति। 'दिवे[1] त्त्वाऽन्तरिक्षाय त्त्वा पृथिव्व्यै त्त्वे'तीमानेवैतल्लोकानूर्ज्जा रसेन भाजयत्त्येषु लोकेषूर्ज्जꣳ रसन्दधाति ॥ १२ ॥ अथ याः प्प्रोक्षण्ण्यः †परिशिष्यन्ते । ता ऽअवटे ऽवनयति 'शुन्धन्ताँल्लोकाः[2] पितृषदना' ऽइति पितृदेवत्त्यो वै कूपः खातस्तमेवैतन्मेद्ध्यं करोति ॥ १३ ॥ ‡अथ बर्हिꣳषि । प्प्राचीनाग्राणि चोदीचीनाग्राणि चाऽवस्तृणाति 'पितृषदनमसी'[3]ति पितृदेवत्त्यं व्वा ऽअस्या ऽएतद्भवति यन्निखातꣳ सा यथा निखातौषधिषु मिता स्यादेवमेतास्वोषधिषु मिता भवति ॥ १४ ॥ ‡‡ तामुच्छ्रयति । 'उद्दिवꣳ[4] स्तभानाऽन्तरिक्षं पृण दृꣳहस्व पृथिव्व्यामि'तीमानेवैतल्लोकानूर्ज्जा रसेन भाजयत्त्येषु लोकेषूर्ज्जꣳ रसं दधाति ॥ १५ ॥ $ अथ मिनोति । 'द्युतानस्त्वा[5] मारुतो मिनोत्त्वि'ति यो वा ऽअयं पवत ऽएष द्युतानो मारुतस्तदेनामेतेन मिनोति 'मित्रावरुणौ[6] ध्रुवेण धर्म्मणे'ति ‖ प्प्राणोदानौ वै

* का० श्रौ० सू० ६. २. १६ ।
† का० श्रौ० सू० ६. २. १७ ।
‡ का० श्रौ० सू० ६. २. १८ ।
‡‡ का० श्रौ० सू० ८. ५. २९ ।
$ का० श्रौ० सू० ८. ५. ३० ।
‖ का० श्रौ० सू० ६. ३. ९–१० ।

(१) शु० सं० अ० ५ क० २६ । (२) शु० सं० १० अ० ५ क० २६ । (३) शु० सं० अ० ५ क० २६ । (४) शु० सं० अ० ५ क० २७ । (५) शु० सं० अ० ५ क० २७ । (६) शु० सं० अ० ५ क० २७ ।

यस्मा ऽएवं करोति * तꣳ सादयति 'प्राणाय त्वे'ति प्राणो ह्यस्यैषः ॥ २६ ॥ दक्षिणार्द्धे हैके सादयन्ति । एताꣳ ह्येष दिशमनु सञ्चरतीति तदु तथा न कुर्य्यादुत्तरार्द्ध ऽएवैनꣳ सादयेन्नो ह्येतस्या ऽआहुतेः का चन पराऽस्ति तꣳ सादयति प्राणाय त्वेति प्राणो ह्यस्यैषः ॥ २७ ॥ † अथोपाꣳशुसवनमादत्ते । ते न दशाभिर्न्न पवित्रेणोपस्पृशति यथा ह्यद्भिः प्राणिक्तमेवं तद्यदꣳशुराश्लिष्टः स्यात्पाणिनैव प्रच्छꣳस्योदञ्चमुपनिपादयेद् '(२)व्यानाय त्वे'ति व्यानो ह्यस्यैषः ॥ २८ ॥ (A)

प्रथमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



[ अन्तर्यामग्रहः ]

प्राणो ह वा ऽअस्योपाꣳशुः । व्यान ऽउपाꣳशुसवन ऽउदान ऽएवाऽन्तर्य्यामः ॥ १ ॥ अथ यस्मादन्तर्य्यामो नाम । यो वै प्राणः स ऽउदानः स व्यानस्तमेवाऽस्मिन्नेतत्पराञ्चं प्राणं दधाति यदुपाꣳशुं गृह्णाति तमेवाऽस्मिन्नेतत्प्रत्यञ्चमुदानं दधाति यदन्तर्य्यामं गृह्णाति सोऽस्याऽयमुदानोऽन्तरात्मन्न्यतस्तद्यदस्यैषोऽन्तरात्मन्न्यतो यद्वेनेनेमाः प्रजा यतास्तस्मादन्तर्य्यामो नाम ॥ २ ॥ तमन्तः

* का० श्रौ० सू० ९. ४. ३७ ।

( १ ) शु० सं० अ० ७ क० ३ ।

† का० श्रौ० सू० ९. ४. ३८ ।

( २ ) शु० सं० अ० ७ क० ३ ।

(A) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ५. १. १; क० सं० २६. १; कपि० सं० ४१. ९; तै० सं० ६. ४. ५ । मै० सं० ४. ५. ५ ।

पवित्राद्गृह्णाति। प्रत्यञ्चमेवाऽस्मिन्नेतदुदानं दधाति सोऽस्या-ऽयमुदानोऽन्तरात्मन्निह त ऽएतेनो हाऽस्याऽऽप्युपाꣳशुरन्तः पवित्राद्गृहीतो भवति समानꣳ ह्येतद्यदुपाꣳश्वन्तर्यामौ प्राणोदानौ ह्येतेनो हैवाऽस्यैषोऽपीतरेषु ग्रहेष्वनाक्षिद्भवति ॥ ३ ॥ अथ यस्मात्सोमं पवित्रेण पावयति । यत्र वै सोमः स्वं पुरोहितं बृहस्पतिं जिज्यौ तस्मै पुनर्ददौ तेन सꣳश-शाम तस्मिन्पुनर्ददुष्यासैवाऽतिशिष्टमेनो यदीन्नूनं ब्रह्म-ज्यानायाऽभिदध्यौ ॥ ४ ॥ तं देवाः पवित्रेणाऽपावयन् । स मेध्यः पूतो देवानाꣳ हविरभवत्तथो ऽएवैनमेष ऽएतत्प-वित्रेण पावयति स मेध्यः पूतो देवानाꣳ हविर्भवति ॥ ५ ॥ तद्यदुपयामेन ग्रहा गृह्यन्ते । इयं वा ऽअदितिस्त-स्या ऽअदः प्रायणीयꣳ ऽहविरसावादित्यश्चरुस्तद्वैतत्पुरेव सुत्यायै सा हेयं देवेषु सुत्यायामपि त्वमीषेऽस्त्वेव मेऽपि प्रसुते भाग ऽइति ॥ ६ ॥ ते ह देवा ऽऊचुः । व्यादि-ष्टोऽयं देवताभ्यो यज्ञस्त्वयैव गृहा गृह्यन्तां देवताभ्यो हूयन्तामिति तथेति सोऽस्या ऽएष प्रसुते भागः ॥ ७ ॥ तद्यदुपयामेन ग्रहा गृह्यन्ते । इयं वा ऽउपयाम ऽइयं वा-ऽइदमन्नाद्यमुपयच्छति पशुभ्यो मनुष्येभ्यो वनस्पतिभ्य-ऽइतो वा ऽऊर्ध्वा देवा दिवि हि देवाः ॥ ८ ॥ तद्यदुप-यामेन ग्रहा गृह्यन्ते । अनयैव तद्गृह्यन्तेऽथ यद्योनौ सादु-यतीयं वा ऽअस्य सर्वस्य योनिरस्यै वा ऽइमाः प्रजाः प्रजाताः ॥ ९ ॥ तं वा ऽएतꣳ । रेतो भूतꣳ सोममृत्विजो बिभ्रति यद्वा ऽअयोनौ रेतः सिच्यते प्र वै तन्मी-

यतेऽथ यद्योनौ सादयत्यस्यामेव तत्सादयति ॥ १० ॥ प्राणोदानौ ह वा ऽअस्यैतौ ग्रहौ । तयोरुदितेऽन्न्यतरं जुहोत्यनुदितेऽन्न्यतरं प्राणोदानयोर्व्व्याकृत्यै प्प्राणोदानावेवैतद्व्याकरोति तस्म्मादेतौ समानावेव सन्तौ नानेवाऽऽचक्षते प्प्राण ऽइति चोदान ऽइति च ॥ ११ ॥ अहोरात्रे ह वाऽअस्यैतौ ग्रहौ । तयोरुदितेऽन्न्यतरं जुहोत्यनुदितेऽन्न्यतरमहोरात्रयोर्व्व्याकृत्या ऽअहोरात्रे ऽएवैतद्व्याकरोति ॥ १२ ॥ अहः सन्तमुपाᳪशुम् । तᳪ रात्रौ जुहोत्यहरेवैतद्रात्रौ दधाति तस्म्मादपि सुतमिस्रायामुपैव किञ्चित्ख्यायते ॥ १३ ॥ रात्रिᳪ सन्तमन्तर्य्यामम् । तमुदिते जुहोति रात्रिमेवैतदहन्दधाति तेनो हाऽसावादित्य ऽउद्यन्नेवेमाः प्प्रजा न प्प्रदहति तेनेमाः प्प्रजास्त्राताः ॥ १४ ॥ * अथाऽतो गृह्णात्येव । 'उपयामगृहीतोऽसी'[1]त्युक्त ऽउपयामस्य बन्धु'रन्तर्य्यच्छ[2] मघवन्न्पाहि सोममि'तीन्द्रो वै मघवानिन्द्रो यज्ञस्य नेता तस्म्मादाह मघवन्निति पाहि सोममिति गोपाय सोममित्त्येवैतदा'होरुष्य[3] राय ऽएषो यजस्वे'ति पशवो वै रायो गोपाय पशूनित्त्येवैतदाहेषो यजस्वेति प्प्रजा वाऽइषस्ता ऽएवैतद्यायजूकाः करोति ता ऽइमाः प्प्रजा यजमाना ऽअर्च्चन्त्यः श्राम्म्यन्त्यश्चरन्ति ॥ १५ ॥ 'अन्तस्ते[4] द्यावापृथिवी दधामि । 'अन्तर्द्दधाम्म्युर्व्वन्तरिक्षम् । सजू-

* "उदितेऽन्तर्यामग्रहणमुपयामगृहीत इति" ( का० श्रौ० सू० ९. ६. १ )

( १ ) शु० सं० अ० ७ क० ४ । ( २ ) शु० सं० अ० ७ क० ४ । ( ३ ) शु० सं० अ० ७ क० ४ । ( ४ ) शु० सं० अ० ७ क० ५ । ( ५ ) शु० सं० अ० ७ क० ५ ।

ह्वेभिरवरैः परैश्चे'ति तदेनं वैश्वदेवं करोति तद्यदेनेनेमाः प्प्रजाः प्प्राणश्चरँश्चोदनश्चरँश्चाऽन्तरिक्षमनुचरन्ति तेन वैश्वदेवो'ऽन्तर्य्यामे मघवन्मादयस्वे'तीन्द्रो वै मघवानिन्द्रो यज्ञस्य नेता तस्मादाह मघवन्नित्यथ यदन्तरिति गृह्णात्यन्तस्त्वा-त्मन्दध ऽइत्येवैतदाह ॥ १६ ॥ तं गृहीत्वा * परिमार्ष्टि । नेद्व्यवश्च्योतादिति तं न सादयत्युदानो ह्यस्यैष तस्मादय-मसन्न ऽउदानः सञ्चरति यदीत्वभिचरेदथैनछ सादयेद-मुष्यत्वोदानछ सादयामीति ॥ १७ ॥ स यद्युपाꣳशुꣳ सादयेत् । अथैनछ सादयेद्यद्युपाꣳशुं न सादयेन्नैनछ सादयेद्यद्युपाꣳशुमपिदध्यादप्येनं दध्याद्यद्युपाꣳशुं नाऽपि-दध्यान्नैनमपिदध्याद्यथोपाꣳशोः कर्म्म तथैतस्य समानछ ह्येतद्यदुपाꣳश्वन्तर्य्यामौ प्प्राणोदानौ हि ॥ १८ ॥ † ता-ऽउ ह चरकाः । नानैव मन्त्राभ्यां जुह्वति प्प्राणोदानौ वा-ऽअस्यैतौ नानावीर्य्यौ प्प्राणोदानौ कुर्म्म ऽइति वदन्तस्तदु तथा न कुर्य्यान्मोहयन्ति ह ते यजमानस्य प्प्राणोदानाव-पीद्वा ऽएनं तूष्णीं जुहुयात् ॥१९॥ स यद्वा ऽउपाꣳशुं मन्त्रेण जुहोति । तदेवाऽस्यैषोऽपि मन्त्रेण हुतो भवति किमु तत्तूष्णीं जुहुयात्समानछ ह्येतद्यदुपाꣳश्वन्तर्य्यामौ प्प्राणो-दानौ हि ॥ २० ॥ स येनैवोपाꣳशुं मन्त्रेण जुहोति ।

---

( १ ) शु० सं० अ० ७ क० ५ ।

* का० श्रौ० सू० ९. ६. ३ ।

† तै० सं० १. ४. २. ३; मै० सं० १. ३. ४; काठ० ४. १; संहितासु पृथगेव होममन्त्राः उक्ताः ।

तेनैवैतं मन्त्रेण जुहोति 'स्वाङ्कृतोऽसि विश्वेभ्य ऽइन्द्रियेभ्यो दिव्येभ्यः पार्थिवेभ्यो मनस्त्वाष्टु स्वाहा त्वा सुभव सूर्यायेत्युक्तो यजुषो बन्धुः ॥२१॥ अथ हुत्वाऽवाञ्चं ग्रहमवमार्ष्टि । इदं वा ऽउपांशुः हुत्वोर्ध्वमुन्माष्टर्यथाऽत्राऽवाञ्चमवमार्ष्टि प्रत्यञ्चमेवाऽस्मिन्नेतदुदानं दधाति ॥ २२ ॥ अथ नीचा पाणिना । मध्यमे परिधौ प्रत्यगुपमार्ष्टीदं वा ऽउपांशुः हुत्वोत्तानेन पाणिना मध्यमे परिधौ प्रागुपमाष्टर्यथाऽत्र नीचा पाणिना मध्यमे परिधौ प्रत्यगुपमार्ष्टि प्रत्यञ्चमेवाऽस्मिन्नेतदुदानं दधाति 'देवेभ्यस्त्वा मरीचिपेभ्य' ऽइति सोऽसावेव बन्धुः ॥ २३ ॥ तं प्रत्याक्रम्य * सादयति । 'उदानाय त्वे'त्युदानो ह्यस्यैष तानि वै सꣳस्पृष्टानि सादयति प्राणोदानानेवैतत्सꣳस्पर्शयति प्राणोदानान्त्सन्दधाति ॥ २४ ॥ तानि वा ऽअनिरुच्यमानानि शेरे । आ तृतीयसवनात्तस्मादिमे मनुष्याः स्वपन्ति तानि पुनस्तृतीयसवने प्रयुज्यन्ते तस्मादिमे मनुष्याः सुप्त्वा प्रबुध्यन्ते तेऽनिशिताश्चराऽचरा यज्ञस्यैवैतद्विधामनु वयऽइव ह वै यज्ञो विधीयते तस्योपांश्वन्तर्यामावेव पक्षावात्मोपांशुसवनः ॥ २५ ॥ तानि वा ऽअनिरुच्यमानानि शेरे । आ तृतीयसवनात्तायते यज्ञ ऽएति वै तद्यत्तायते तस्मादिमानि वयांसि विगृह्य पक्षावनायुवानानि पतन्ति

(१) शु० सं० अ० ७ क० ६ । (२) शु० सं० अ० ७ क० ६ ।
* का० श्रौ सू० ९. ६. ५ ।
(३) शु० सं० अ० ७ क० ६ ।

तानि पुनस्तृतीयसवने प्प्रयुज्ज्यन्ते तस्म्मादिमानि व्वयाᳫंसि समासं पक्षावायुवानानि पतन्ति यज्ञस्यैवैतद्वि-धामनु ॥ २६ ॥ * इयᳫं ह वा ऽउपाᳫंशुः । प्राणो ह्युपाᳫं-शुरिमाᳫं ह्येव प्प्राणन्नभिप्प्राणित्त्यसावेवाऽन्तर्य्यामः ऽउदानो ह्यन्तर्य्यामोऽमुᳫं ह्येव लोकमुदनन्नब्भ्युदनित्त्यन्तरिक्षमेवो-पाᳫंशुसवनो व्व्यानो ह्युपाᳫंशुसवनोऽन्तरिक्षᳫं ह्येव व्व्यनन्नभिव्व्यनिति ॥ २७ ॥ (B)

प्रथमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

[ ऐन्द्रवायवग्रहः ]

व्वाग्घ वा ऽअस्यैन्द्रवायवः । एतद्वव्ध्यात्ममिन्द्रो ह यत्र व्वृत्राय व्वज्ज्रं प्रजहार सोऽबलीयान्मन्न्यमानो ना-ऽस्तृषीतीव बिब्भ्यन्निलयाञ्चक्रे तदेवाऽपि देवा ऽअपन्न्यलय-न्त ॥ १ ॥ ते ह देवा ऽऊचुः । न वै हतं व्वृत्रं विद्म न जीवᳫं हन्त न ऽएको व्वेत्तु यदि हतो वा व्वृत्रो जीवति वेति ॥ २ ॥ ते व्वायुमब्रुवन् । अयं व्वै व्वायुर्य्योऽयं पवते व्वायो त्त्वमिदं विद्धि यदि हतो वा व्वृत्रो जीवति वा त्त्वं व्वै न-ऽआशिष्ठोऽसि यदि जीविष्यति त्त्वमेव क्षिप्प्रं पुनरागमि-ष्यसीति ॥ ३ ॥ स होवाच । किम्मे ततः स्यादिति प्प्रथम-वषट्कार ऽएव ते सोमस्य राज्ञ ऽइति तथेत्त्येयाय व्वायुरेद्धतं

* अत्र शतम् २३०० ।

( B ) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—का० श० ५. १. २; कठ० सं० २७ १. २; कपि० सं० ४१. ९; तै० सं० ६. ४. ६; मै० सं० ४. ५. ६ ।

व्वृत्रः स होवाच हतो व्वृत्रो यद्ध ते कुर्य्यात तत्कुरुतेति ॥ ४ ॥ ते देवा ऽअभ्यसृज्यन्त । यथा व्वित्तिं व्वेत्स्यमाना-ऽएवꣳ स यमेको ऽलभते स ऽएकदेवत्त्यो ऽभवद्यं द्वौ स द्विदेवत्त्यो यं बहवः स बहुदेवत्त्यस्तद्यदेनं पात्रैर्व्यगृह्णत तस्माद्ग्रहा नाम ॥ ५॥ स ऽएषामापूयत् । स ऽएनाञ्छुक्तः पूतिरभिववौ स नाऽलमाहुत्त्या ऽआस नाऽलं भक्षाय ॥ ६ ॥ ते देवा व्वायुमब्रुवन् । व्वायविमं नो व्विवाहीमं नः स्वदयेति स होवाच किम्मे ततः स्यादिति त्वयैवैतानि पात्राण्याचक्षीरन्निति तथेति होवाच यूयं तु मे सच्च्युप-वातेति ॥ ७ ॥ तस्य देवाः । यावन्मात्रमिव गन्धस्याऽप-जघ्नुस्तं पशुष्वदधुः स ऽएष पशुषु कुणपगन्धस्तस्मात्कुण-पगन्धान्नाऽपिगृह्णीत सोमस्य हैष राज्ञो गन्धः ॥ ८ ॥ नो ऽएव निष्ठीवेत् । तस्माद्यद्यप्यासक्त ऽइव मन्येता-ऽभिवातं परीयाच्छ्रीर्व्वै सोमः पाप्मा यक्ष्मः स यथा श्रेयस्यायति पापीयान्प्रत्त्यवरोहेदेवꣳ हाऽस्मा-द्यक्ष्मः प्प्रत्त्यवरोहति ॥ ९ ॥ अथैतरं व्वायुर्व्व्यवात् । तद-स्वदयत्ततोऽलमाहुत्त्या ऽआसालं भक्षाय तस्मादेतानि नानादेवत्त्यानि सन्ति व्वायव्व्यानीत्त्याचक्षते सोऽस्यैष प्प्रथमवषट्कारश्च सोमस्य राज्ञ ऽएतान्यु ऽएनेन पात्राण्याचक्षते ॥ १० ॥ इन्द्रो ह वा ऽईक्षाञ्चक्रे । व्वायुर्व्वै नोऽस्य यज्ञस्य भूयिष्ठभाग्यस्य प्प्रथमवषट्कारश्च सो-मस्य राज्ञ ऽएतान्न्यु ऽएनेन पात्राण्याचक्षते हन्ताऽस्मिन्न-पित्वमिच्छा ऽइति ॥ ११ ॥ स होवाच । व्वायवा

माऽस्मिन्ग्रहे भजेति किं ततः स्यादिति निरुक्तमेव व्वाग्वदेदिति निरुक्तञ्चेद्वाग्वदेदात्त्वा भजामीति तत ऽएष ऽऐन्द्रवायवो ग्रहोऽभवद्वायव्व्यो हैव ततः पुरा ॥ १२ ॥ स ऽइन्द्रोऽब्रवीत्। अर्द्धम्मेऽस्य ग्रहस्येति तुरीयमेव त ऽइति व्वायुरर्द्धमेव म ऽइतीन्द्रस्तुरीयमेव त ऽइति व्वायुः ॥ १३ ॥ [ अर्धप्रपाठकः ॥ ६८ ॥ ] तौ प्रजापतिं प्रतिप्प्रश्नमेयतुः। स प्प्रजापतिर्ग्रहं द्वेधा चकार स होवाचेदं व्वायोरित्यथ पुनरर्द्धं द्वेधा चकार स होवाचेदं व्वायोरितीदं तवेतीन्द्रं तुरीयमेव भाजयाञ्चकार यद्वै चतुर्त्थं तत्तुरीयं तत ऽएष ऽऐन्द्रतुरीयो ग्रहोऽभवत् ॥ १४ ॥ तस्य वा ऽएतस्य ग्रहस्य द्वे पुरोरुचौ वायव्व्यैव पूर्वैन्द्रवायव्व्युत्तरा द्वे ऽअनुवाक्ये व्वायव्व्यैव पूर्वैन्द्रवायव्व्युत्तरा द्वौ प्प्रैषौ व्वायव्व्य ऽएव पूर्व ऽऐन्द्रवायव ऽउत्तरो द्वे याज्ये व्वायव्व्यैव पूर्वैन्द्रवायव्व्युत्तरैवमेनं तुरीयं—तुरीयमेव भाजयाञ्चकार ॥ १५ ॥ स होवाच। तुरीयं-तुरीयं चेन्मामबीभजुस्तुरीयमेव तर्हि वाङ्निरुक्तं व्वदिष्यतीति तदेतत्तुरीयं व्वाचो निरुक्तं यन्मनुष्या व्वदन्त्यथैतत्तुरीयं व्वाचोऽनिरुक्तं यत्पशवो व्वदन्त्यथैतत्तुरीयं व्वाचोऽनिरुक्तं यद्वयाꣳसि व्वदन्त्यथैतत्तुरीयं व्वाचोऽनिरुक्तं यदिदं क्षुद्रꣳ सरीसृपं व्वदति ॥ १६ ॥ तस्मादेतदृषिणाभ्यनूक्तम्। 'चत्वारि[1] व्वाक्परिमिता पदानि तानि व्विदुर्ब्राह्मणा ये मनीषिणः। गुहा त्रीणि निहिता

(१) ऋ० सं० २. ३. २२।

नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ती'ति ॥१७॥ * अथाऽतो गृह्णात्येव । '[1]आ वायो भूष शुचिपा ऽउप नः सहस्रं ते नियुतो विश्ववार । उपो ते ऽअन्धो मद्यमयामि यस्य देव दधिषे पूर्वपेयं वायवे त्वे'ति ॥ १८ ॥ † अथाऽपगृह्य पुनरानयति । '[2]इन्द्रवायू ऽइमे सुता ऽउप प्रयोभिरागतम् । इन्दवो वामुशन्ति हि । उपयामगृहीतोऽसि वायव ऽइन्द्रवायुभ्यान्त्वैष ते योनिः सजोषोभ्यान्त्वे'ति सादयति स यदाह सजोषोभ्यान्त्वेति यो वै वायुः स ऽइन्द्रो य ऽइन्द्रः स वायुस्तस्मादाहैष ते योनिः सजोषोभ्यान्त्वेति ॥१९॥(C)

प्रथमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥



[ मैत्रावरुणग्रहः ]

क्रतूदक्षौ ह वा ऽअस्य मित्रावरुणौ । एतन्न्वध्यात्मं स यदेव मनसा कामयत ऽइदं मे स्यादिदं कुर्वीयेति स ऽएव क्रतुरथ यदस्मै तत्समृध्यते स दक्षो मित्र ऽएव क्रतुर्वरुणो दक्षो ब्रह्मैव मित्रः क्षत्रं वरुणोऽभिगन्तैव ब्रह्म कर्त्ता क्षत्रियः ॥ १ ॥ ते हैते ऽअग्रे नानेवाऽऽसतुः । ब्रह्म च क्षत्रं च ततः शशाकैव ब्रह्म मित्र ऽऋते क्षत्राद्वरुणात्स्थातुम् ॥ २ ॥ नक्षत्रं वरुणः । ऋते ब्रह्मणो मित्राद्यद्ध किं च वरुणः कर्म

* का० श्रौ० सू० ९. ६. ६ ।

† का० श्रौ० सू० ९. ६. ७ ।

( १ ) शु० सं० अ० ७ क० ७ । ( २ ) शु० सं० अ० ७ क० ८ ।

(C) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—काण्व० श० ५. १. ३; का० सं० २७. ३; कपि० सं० ६. ४. ७; मै० सं० ४. ५. ८ ।

चक्रेऽप्प्रसूतं ब्रह्मणा मित्रेण न हैवाऽस्म्मै तत्समानृधे ॥ ३ ॥ स क्षत्रं व्वरुणः। ब्रह्म मित्रमुपमन्त्रयाञ्चक्र ऽउप-मावर्त्तस्व सᳬसृजावहै पुरस्त्वा करवै त्वत्प्रसूतः कर्म्म करवा ऽइति तथेति तौ समसृजेतां तत ऽएष मैत्रावरुणो ग्रहोऽभवत् ॥ ४ ॥ सो ऽएव पुरोधा। तस्म्मान्न ब्राह्मणः सर्व्वस्येव क्षत्रियस्य पुरोधां कामयेत सᳬ ह्येतौ सृजेते सुकृतं च दुष्कृतञ्च नो ऽएव क्षत्रियः सर्व्वमिव ब्राह्मणं पुरोदधीत सᳬ ह्येवैतौ सृजेते सुकृतञ्च दुष्कृतञ्च स यत्ततो व्वरुणः कर्म्म चक्रे प्प्रसूतं ब्रह्मणा मित्रेण सᳬ हैवाऽस्म्मै तदानृधे ॥ ५ ॥ तत्तदवक्लृप्तमेव। यद् ब्राह्मणोऽराजन्यः स्याद्यद्यु राजानं लभेत समृद्धं तदेतद्ध त्वेवाऽनवक्लृप्तं यत्क्षत्रियो-ऽब्राह्मणो भवति यद्ध किञ्च कर्म्म कुरुतेऽप्प्रसूतं ब्रह्मणा मित्रेण न हैवाऽस्म्मै तत्समृद्ध्यते तस्म्माद्‌ क्षत्रियेण कर्म्म करिष्यमाणेनोपसर्त्तव्य ऽएव ब्राह्मणः सᳬ हैवाऽस्म्मै तद् ब्रह्मप्प्रसूतं कर्म्मर्द्ध्यते ॥ ६ ॥ अथाऽतो * गृह्णात्येव। 'अयं व्वाम्मित्रावरुणा सुतः सोम ऽऋतावृधा। ममेदिह श्रुतᳬ हवम्। उपयामगृहीतोऽसि मित्रावरुणाभ्यान्त्वे'ति ॥ ७ ॥ तं पयसा श्रीणाति। तद्यत्पयसा श्रीणाति व्वृत्रो वै सोम ऽआसीत्तं यत्र देवा ऽअघ्नँस्तं मित्रमब्रुवँस्त्वमपि हᳬसीति स न चकमे सर्व्वस्य वा ऽअहं मित्रमस्म्मि न मित्रᳬ सन्नमित्रो भविष्यामीति तं व्वै त्वा यज्ञादन्तरेष्याम-

* "मैत्रावरुणमयं वामिति" (का० श्रौ० सू० ९. ६. ८)।

(१) शु० सं० अ० ७ क० ९।

ऽइत्त्यहमपि हन्मीति होवाच तस्म्मात्पशवोऽपाऽक्राम-न्मित्रꣳ सन्नमित्रोऽभूदिति स पशुभिर्व्यार्द्ध्यत तमेतद्देवाः पशुभिः समार्द्धयन्यत्पयसा श्रीणँस्तथो ऽएवैनमेष ऽएत-त्पशुभिः समर्द्धयति यत्पयसा श्रीणाति ॥ ८ ॥ तदाहुः । शश्वद्ध नैव चकमे हन्तुमिति तद्यद्देवाऽत्र पयस्तन्मित्रस्य सोम ऽएव व्वरुणस्य तस्म्मात्पयसा श्रीणाति ॥ ९ ॥ * स श्रीणाति । 'राया व्वयꣳ ससवाꣳसो मदेम हव्व्येन देवा यवसेन गावः । तां धेनुम्मित्रावरुणा युवन्नो विश्वाहा धत्तमनपस्फुरन्तीमेष ते योनिर्ऋतायुब्भ्यान्त्वे'ति सादयति स यदाहर्त्तायुब्भ्यान्त्वेति ब्रह्म वा ऽऋतं ब्रह्म हि मित्रो ब्रह्मो ह्यृतं व्वरुण ऽएवाऽऽयुः संवत्सरो हि व्वरुणः संवत्सर-ऽआयुस्तस्म्मादाहैष ते योनिर्ऋतायुब्भ्यान्त्वेति ॥१०॥ (D)

प्रथमाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥



[ आश्विनग्रहः ]

श्रोत्रꣳ ह वा ऽअस्याऽऽश्विनः । तस्म्मात्सर्व्वतः परिहारं भक्षयति सर्व्वतो ह्यनेन श्रोत्रेण शृणोति यत्र वै भृगवो वाऽङ्गिरसो वा स्वर्ग्गं लोकꣳ समाश्नुवत तच्च्यव-नो वा † भार्ग्गवश्च्च्यवनो वाऽङ्गिरसस्तदेव जीर्ण्णिः कृत्या-रूपो जहे ॥ १ ॥ शर्य्यातो ह वा ऽइदं मानवो ग्रामेण

* का० श्रौ० सू० ९. ६. ९ ।

( १ ) शु० सं० अ० ७ क० १० ।

(D) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ५. १. ४; कठ० सं० २७. ४; कपि० सं० ४२. ४; तै० सं० ६. ४, ८; मै० सं० ४. ५ ।

† आख्यायिकेयं महाभारतस्य वनपर्वण्यप्युपलभ्यते ( अ० १२२–१२५ पृ० १९२–१९६ चि० शा० पूना ) ।

चचार। स तदेव प्प्रातिवेशो निविविशे तस्य कुमाराः क्रीडन्त ऽइमं जीर्ण्णि कृत्यारूपमनर्त्थ्यं मन्न्यमाना लोष्टै-र्व्विपिपिषुः ॥ २ ॥ स शर्य्यातिभ्य्यश्चुक्रोध । तेब्भ्यो-ऽसंज्ञाञ्चकार पितैव पुत्रेण युयुधे ब्भ्राता ब्भ्रात्रा ॥३॥ शर्य्यातो ह वा ऽईक्षाञ्चक्रे । यत्किमकरं तस्मादिदमापदीति स गोपालाँश्चाऽविपालाँश्च सᳩह्वयितवा ऽउवाच ॥ ४ ॥ स होवाच । को वोऽद्येह किञ्चिदद्राक्षीदिति ते होचुः पुरुष ऽएवाऽयं जीर्ण्णिः कृत्यारूपः शेते तमनर्त्थ्यं मन्न्य-मानाः कुमारा लोष्टैर्व्यपिक्षन्निति स व्विदाञ्चकार स वै च्च्यवन ऽइति ॥ ५ ॥ स रथं युक्त्वा । सुकन्याᳩ शार्य्या-तीमुपाऽऽधाय प्प्रासिष्यन्द स ऽआजगाम यत्रर्षिरास तत् ॥ ६ ॥ स होवाच । ऋषे नमस्ते यन्नाऽवेदिषं तेनाऽहिᳩ-सिषमियᳩ सुकन्या तया तेऽपह्नुवे सञ्जानीतां मे ग्राम-ऽइति तस्य ह तत ऽएव ग्रामः सञ्जज्ञे स ह तत ऽएव शर्य्यातो मानव ऽउद्युयुजे नेदपरᳩ हिनसानीति ॥ ७ ॥ अश्विनौ ह वा ऽइदं भिषज्यन्तौ चेरतुः । तौ सुकन्यामुपे-यतुस्तस्यां मिथुनमीषाते तन्न जज्ञौ ॥ ८ ॥ तौ होचतुः । सुकन्ये कमिमं जीर्ण्णिं कृत्यारूपमुपशेष ऽआवामनुप्प्रेहीति सा होवाच यस्मै मां पिताऽदान्नैवाऽहं तं जीवन्तᳩ हास्या-मीति तद्धाऽयमृषिराजज्ञौ ॥ ९ ॥ स होवाच । सुकन्ये किं त्वैतदवोचतामिति तस्मा ऽएतद्व्याचचक्षे स ह व्व्याख्यात-ऽउवाच यदि * त्वैतत्पुनर्ब्रवतः सा त्वं ब्रूतान्न वै सुसर्व्वाविव

* 'त्वैतत्पुनर्ब्रुवतः' इति पाठः 'ग-च' पुस्तकयोः ।

स्तथो न सुसमृद्धाविवाऽथ मे पतिं निन्दथ ऽइति तौ यदि त्वाऽब्रवतः केनाऽवमसर्वौ स्वः केनाऽसमृद्धाविति सा त्वं ब्रूतात्पतिं नु मे पुनर्युवाणं कुरुतमथ वां वक्ष्यामीति तां पुनरुपेयतुस्ताᳫं हैतदेवोचतुः ॥ १० ॥ सा होवाच । न वै सुसर्वाविव स्तथो न सुसमृद्धाविवाऽथ मे पतिं निन्दथ ऽइति तौ होचतुः केनाऽवमसर्वौ स्वः केनाऽसमृद्धाविति सा होवाच पतिं नु मे पुनर्युवाणं कुरुतमथ वां वक्ष्यामीति ॥ ११ ॥ तौ होचतुः । एतᳫं ह्रदमभ्यवहर स येन वयसा कमिष्यते तेनोदैष्यतीति तᳫं ह्रदमभ्यवजहार स येन वयसा चकमे तेनोदेयाय ॥ १२ ॥ तौ होचतुः । सुकन्ये केनाऽवमसर्वौ स्वः केनाऽसमृद्धाविति तौ हर्षिरेव प्रत्युवाच कुरुक्षेत्रेऽमी देवा यज्ञं तन्वते ते वां ऽयज्ञादन्तर्यन्ति तेनाऽसर्वौ स्थस्तेनाऽसमृद्धाविति तौ ह तत ऽएवाऽश्विनौ प्रेयतुस्तावाजग्मतुर्देवान्यज्ञं तन्वानान्स्तुते बहिष्पवमाने ॥ १३ ॥ तौ होचतुः । उप नौ ह्वयध्वमिति ते ह देवा ऽऊचुर्न वामुपह्वयिष्यामहे बहु मनुष्येषु सᳫंसृष्टमचारिष्टं भिषज्यन्ताविति ॥ १४ ॥ तौ होचतुः । विशीर्ष्णा वै यज्ञेन यजध्व ऽइति कथं विशीर्ष्णेत्युप नु नौ ह्वयध्वमथ वो वक्ष्याव ऽइति तथेति ता ऽउपाऽह्वयन्त ताभ्यामेतमाश्विनं ग्रहमगृह्णँस्तावध्वर्यू यज्ञस्याऽभवतां तावेतद्यज्ञस्य शिरः प्रत्यधत्तां तदद्स्तद्दिवाकीर्त्यानां ब्राह्मणे व्याख्यायते यथा तद्यज्ञस्य शिरः प्रतिदधतुस्तस्मादेष स्तुते

बहिष्पवमाने ग्रहो गृह्यते स्तुते हि बहिष्पवमान ऽआगच्छताम् ॥ १५ ॥ तौ होचतुः । मुख्यौ वा ऽआवां यज्ञस्य स्वो यावत्कुर्य्यु ऽइह नाविमं पुरस्ताद् ग्रहं पर्य्याहरताऽभि द्विदेवत्यानिति ताभ्यामेतं पुरस्ताद् ग्रहं पर्य्याजह्नुरभि द्विदेवत्याँस्तस्मादेष दशमो ग्रहो गृह्यते तृतीय ऽएव वषट्क्रियतेऽथ यदश्विनाविती॒मे ह वै द्यावापृथिवी प्रत्यक्षमश्विनाविमे हीदꣳ सर्व्वमाश्नुवातां पुष्करस्रजावित्यग्निरेवाऽस्यै पुष्करमादित्योऽमुष्यै ॥ १६ ॥ अथाऽतो गृह्णात्येव । '[1]या वां कशा मधुमत्यश्विना सूनृतावती । तया यज्ञं मिमिक्षतम् । उपयामगृहीतोऽस्यश्विभ्यान्त्वैष ते योनिर्म्माध्वीभ्यान्त्वे'ति सादयति तं वै मधुमत्यर्च्चा गृह्णाति माध्वीभ्यान्त्वेति सादयति तद्यन्मधुमत्यर्च्चा गृह्णाति माध्वीभ्यान्त्वेति सादयति ॥ १७ ॥ दध्यङ् ह वाऽआभ्यामाथर्व्वणः । मधु नाम ब्राह्मणमुवाच तदेनयोः प्रियं धाम तदेवैनयोरेतेनोपगच्छति तस्मान्मधुमत्यर्च्चा गृह्णाति माध्वीभ्यान्त्वेति सादयति ॥ १८ ॥ तानि वाऽएतानि । श्लक्ष्णानि पात्राणि भवन्ति * रास्नावमैन्द्रवायवपात्रं तत्तस्य द्वितीयꣳ रूपं तेन तद् द्विदेवत्यमजकावं मैत्रावरुणपात्रं तत्तस्य द्वितीयꣳ रूपं तेन तद् द्विदेवत्यमौष्ट्रमाश्विनपात्रं तत्तस्य द्वितीयꣳ रूपं तेन तद् द्विदेवत्यमथ यद्-

(१) शु० सं० अ० ६ क० ११।

* का० श्रौ० सू० ९. २. ५-७।

श्विनाविति मुख्यौ वा ऽअश्विनावौष्ठमिव वा ऽइदं मुखं तस्मादौष्ठमाश्विनपात्रं भवति ॥ १९ ॥ (E)

प्रथमाध्याये पञ्चमं ब्राह्मणम् ॥ ५ ॥

इति प्रथमोऽध्यायः ॥ १ ॥



[ शुक्रामन्थिग्रहौ ]

चक्षुषी ह वा ऽअस्य शुक्रामन्थिनौ। तद्वा ऽएष ऽएव शुक्रो य ऽएष तपति तद्यदेष ऽएतत्तपति तेनैष शुक्रश्चन्द्रमा ऽएव मन्थी ॥ १ ॥ तꣳ सक्तुभिꣳ श्रीणाति। तदेनं मन्थं करोति तेनो ऽएष मन्थ्येतौ ह वा ऽआसां प्रजानां चक्षुषी स यद्धैतौ नोदियातां न हैवेह स्वौ चन पाणी निर्ज्जानीयुꣳ ॥ २ ॥ तयोरत्तैवाऽन्यतरꣳ। आद्योऽन्यतरोऽत्तैव शुक्र ऽआद्यो मन्थी ॥ ३ ॥ तयोरत्तैवाऽन्यतरमनु। आद्योऽन्यतरमन्वत्तैव शुक्रमन्वाद्यो मन्थिनमनु तौ वा ऽअन्यस्मै गृह्येते ऽअन्यस्मै हूयेते शण्डामर्काविच्यसुररक्षसे ताभ्यां गृह्येते देवताभ्यो हूयेते तद्यत्तथा ॥ ४ ॥ यत्र वै देवाꣳ। असुररक्षसान्यपजघ्निरे तदेतावेव न शेकुरपहन्तुं यद्ध स्म देवाꣳ किञ्च कर्म्म कुर्वते तद्ध स्म मोहयित्वा क्षिप्र ऽएव पुनरपद्रवतꣳ ॥ ५ ॥ ते ह देवा ऽऊचुꣳ। उपजानीत यथेमावपहनामहा-ऽइति ते होचुर्गृहावेवाऽऽभ्यां गृह्णाम तावभ्यवैष्यतस्तौ

(E) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ५. १. ५; कठ० सं० २७. ५; कपि० सं० ४२. ५; तै० सं० ६. ४. ९; मै० सं० ४. ६. १।

स्वीकृत्याऽपहनिष्यामह ऽइति ताभ्यां गृहौ जगृहुस्ताव-भ्यवैतां तौ स्वीकृत्याऽपाऽघ्नत तस्माच्छण्डामर्काभ्या-मिति गृह्येते देवताभ्यो हूयेते ॥ ६ ॥ अपि होवाच याज्ञवल्क्यः। नो स्विद्देवताभ्य ऽएव गृह्णीयामा३ विजितरूपमिव हीदमिति तद्वै स तन्मीमाᳯ॑सामेव चक्रे नेत्तु चकार ॥ ७ ॥ इमामु हैके शुक्रस्य पुरोरुचं कुर्वन्ति। 'अयं वेनश्चोदयत्पृश्निगर्भा ज्योतिर्जरायू रजसो विमान' ऽइति तदेतस्य रूपं कुर्म्मो य ऽएष तपतीति यदाह ज्योति-र्जरायुरिति ॥ ८ ॥ इमां त्वेव शुक्रस्य पुरोरुचं कुर्यात्। *'तं[1] प्रत्नथा पूर्वथा विश्वथेमथा ज्येष्ठतातिं बर्हिषदᳯ॑ स्वर्विदमि'त्यत्ता ह्येतमन्वत्ता हि ज्येष्ठस्तस्मादाह ज्येष्ठ-तातिं बर्हिषदᳯ॑ स्वर्विद'[2]म्प्रतीचीनं वृजनं दोहसे धुनि-माशुं जयन्तमनु यासु वर्द्धसे। उपयामगृहीतोऽसि शा-ण्डाय त्वैष ते योनिर्वीरतां पाही'ति सादयत्यत्ता ह्येत-मन्वत्ता हि वीरस्तस्मादाहैष ते योनिर्वीरतां पाहीति दक्षिणार्द्धे सादयत्येताᳯ॑ ह्येष दिशमनु सञ्चरति ॥ ९ ॥ अथ मन्थिनं गृह्णाति। 'अयं वेन[3]श्चोदयत्पृश्निगर्भा ज्ज्योतिर्जरायू रजसो विमाने। इममपाᳯ॑ सङ्गमे सूर्यस्य

* "शुक्रं बैल्वेन तम्प्रत्नथेति" "अयं वेन इत्येके" का० श्रौ० सू० ९. ६. ११, १२; "अयं वेनश्चोदयदिति शुक्रं गृहीत्वा" "तम्प्रत्नथेति मन्थिनं गृहीत्वा" आप० श्रौ० सू० १२. १४. १४–१५; तैत्तिरीय–मैत्रायणीय-कठशाखासु प्रथमतः 'अयं वेनः' ततः 'तम्प्रत्नथा' इत्येव क्रमः स्वीकृतः। काण्व-माध्यन्दिनसंहितयोस्तु तद्वैपरीत्येन आदृतः तै० सं० १. ४. ८. ९; मै० सं० १. ३. १०. ११; कठ० सं० ४. ३; काण्व० सं० १. ७. ७।

(१) शु० सं० अ० ६ क० १२। (२) शु० सं० अ० ६ क० १२। (३) शु० सं० अ० ६ क० १६।

शिशुं न विप्रा मतिभी रिहन्ति । उपयामगृहीतोऽसि मर्काय त्वे'ति ॥ १० ॥ तछं सक्तुभिः श्रीणाति । तद्य-त्सक्तुभिः श्रीणाति वरुणो ह वै सोमस्य राज्ञोऽभीवाऽक्षि प्प्रतिपिपेष तदश्वयत्ततोऽश्वः समभवत्तद्यच्छ्वयथात्सम-भवत्तस्मादश्वो नाम तस्याऽश्रु प्पाऽस्कन्दत्ततो यवः समभवत्तस्मादाहुर्वारुणयो यव ऽइति तद्यदेवाऽस्याऽत्र चक्षुषोऽमीयत तेनैवैनमेतत्समर्द्धयति कृत्स्नं करोति तस्मा-त्सक्तुभिः श्रीणाति ॥ ११ ॥ स * श्रीणाति । 'मनो न येषु हवनेषु तिग्मं विपः शच्च्या वनुथो द्रवन्ता । आयः शर्य्याभिस्तुविनृम्म्णो ऽअस्याश्रीणीताऽऽदिशं गभस्तावेष ते योनिः प्प्रजाः पाही'ति सादयत्याद्यो ह्येतमन्वाद्या हीमाः प्प्रजा विशस्तस्मादाहैष ते योनिः प्प्रजाः पाहीति ॥ १२ ॥ † द्वौ प्प्रोक्षितौ यूपशकलौ भवतः । द्वावप्प्रो-क्षितौ प्प्रोक्षितं चैवाऽद्ध्वर्य्युरादत्तेऽप्प्रोक्षितं चैवमेव प्प्रतिप्प्रस्थाता प्प्रोक्षितं चैवाऽऽदत्तेऽप्प्रोक्षितं च शुक्रमेवाऽद्ध्वर्य्युरादत्ते मन्थिनं प्रतिप्प्रस्थाता ॥ १३ ॥ सोऽद्ध्वर्य्युः । अप्प्रोक्षितेन यूपशकलेनाऽपमा'ष्ट्वर्य्यपमृष्टः शण्ड' ऽइत्येवमेव प्प्रतिप्प्रस्थाता'ऽपमृष्टो मर्क' ऽइति तदाददानावेवाऽसुररक्षसे ऽअपहतो 'देवास्त्वा शुक्रपाः प्प्रणयन्त्वि'त्येवाऽद्ध्वर्य्युर्न्निष्क्रामति 'देवास्त्वा मन्थिपाः

* का० श्रौ० सू० ९. ६. १३ ।

† का० श्रौ० सू० ९. १०. १–५ ।

( १ ) शु० सं० अ० ७ क० १६ । ( २ ) शु० सं० अ० ७ क० १७ । ( ३ ) शु० सं० अ० ७ क० १२ । ( ४ ) शु० सं० अ० ७ क० १७ । ( ५ ) शु० सं० अ० ७ क० १२ ।

[1]प्प्रणयन्त्वि'ति प्प्रातिप्प्रस्त्थाता तदेनौ देवताभ्य ऽएव प्प्रणयतः ॥१४॥ तौ जघनेनाऽऽहवनीयमरत्नी * सन्धत्तः । ता ऽउत्तरवेदौ सादयतो दक्षिणायामेव श्श्रोणावद्ध्वर्य्युः सादयत्युत्तरायां प्रातिप्प्रस्त्थाताऽननुसृजन्तावेवा'[2]ऽनाधृष्टासी'ति तद्रक्षोभिरेवैतदुत्तरवेदिमनाधृष्टां कुरुतो विपर्य्येष्यन्तौ वा ऽएतावाग्निं भवतोऽत्त्येष्यन्तौ तस्म्मा ऽएवैतन्निह्नुवाते तथो हैनौ विपरियन्तावग्निर्न्न हिनस्ति ॥ १५ ॥ सोऽद्ध्वर्य्युः † पर्य्येति । '[3]सुवीरो वीरान्त्प्रजनयन्त्परी'हीत्यत्ता ह्येतमन्वत्ता हि वीरस्तस्म्मादाह सुवीरो वीरान्न्प्रजनयन्न्परीही'[4]त्त्यभि रायस्प्पोषेण यजमानमि'ति तद्यजमानायाऽऽशिषमाशास्ते यदाहाऽभि रायस्प्पोषेण यजमानमिति ॥ १६ ॥ अथ प्प्रातिप्प्रस्त्थाता ‡ पर्य्येति । 'सुप्प्रजाः [5]प्प्रजाः प्प्रजनयन्न्परीही'त्त्याद्यो ह्येतमन्न्वाद्या हीमाः प्प्रजा विशस्तस्म्मादाह सुप्प्रजाः प्प्रजाः प्प्रजनयन्न्परीही'[6]त्त्यभि रायस्प्पोषेण यजमानमि'ति तद्यजमानायाऽऽशिषमाशास्ते यदाहाऽभि रायस्प्पोषेण यजमानमिति ॥ १७ ॥ तावपिधाय निष्क्रामतः । तिर ऽएवैनावेतत्कुरुतस्तस्म्मादिमौ सूर्य्याचन्द्रमसौ प्प्राञ्चौ यन्तौ न कश्चन पश्यति तौ पुरस्तात्परीत्त्याऽपोर्णुतः पुरस्तात्त्तिष्ठन्तौ जुहुत ऽआविरेवैनावे-

* का० श्रौ० सू० ९. १०. ६ ।

( १ ) शु० सं० अ० ७ क० १७ । ( २ ) शु० सं० अ० ७ क० १२, १७ ।

† "सुवीर इति दक्षिणं यूपदेशं गच्छत्यध्वर्युः" ( का० श्रौ० सू० ९. १०. ७ क ) ।

( ३ ) शु० सं० अ० ७ क० १३ । ( ४ ) शु० सं० अ० ७ क० १३ ।

‡ "सुप्रजा इति प्रतिप्रस्थातोत्तरम्" ( का० श्रौ० सू० ९. १०. ७ ख ) ।

( ५ ) शु० सं० अ० ७ क० १८ । ( ६ ) शु० सं० अ० ७ क० १८ ।

तत्कुरुतस्तस्म्मादिमौ सूर्य्याचन्द्रमसौ प्प्रत्यञ्चौ यन्तौ सर्व्वऽएव पश्यति तस्म्मात्परागेतꣳ सिच्यमानं न कश्चन पश्यति तदु पश्चात्प्रजायमानꣳ सर्व्वऽएव पश्यति ॥ १८ ॥ तौ जघनेन * यूपमरत्नी सन्धत्तः । यद्यग्निर्न्नोद्बाधेत यद्यु ऽअग्निरुद्बाधेताऽप्प्यग्रेणैव यूपमरत्नी सन्दध्यातार्थं 'सञ्जग्मानो दिवा पृथिव्या शुक्रꣳ शुक्रशोचिषे'त्येवाऽध्वर्युः 'सञ्जग्मानो दिवा पृथिव्या मन्थी मन्थिशोचिषे'ति प्प्रतिप्प्रस्थाता चक्षुषोरेवैते ऽआरमणे कुरुतश्चक्षुषीऽएवैतत्सन्धत्तस्तस्म्मादिमे ऽअभितोऽस्थिनी चक्षुषी सꣳहिते ॥१९॥ सोऽध्वर्युः । † अप्प्रोक्षितं यूपशकलं निरस्यति 'निरस्तꣳ शण्ड' ऽइत्येवमेव प्प्रतिप्प्रस्थाता 'निरस्तो मर्क' ऽइति तत्पुराऽऽहुतिभ्योऽसुररक्षसे ऽअपहतꣳ ॥ २० ॥ अथाऽध्वर्युः । ‡ प्रोक्षितं यूपशकलमाहवनीये प्प्राऽस्यति 'शुक्रस्याऽधिष्ठानमसी'त्येवमेव प्प्रतिप्प्रस्थाता 'मन्थिनोऽधिष्ठानमसी'ति चक्षुषोरेवैते समिधौ चक्षुषी ऽएवैतत्समिन्धे तस्म्मादिमे समिद्धे चक्षुषी ॥ २१ ॥ तत्र $ जपति । 'अच्छिन्नस्य ते देव सोम सुवीर्य्यस्य रायस्प्पोषस्य ददितारꣳ स्यामे'त्याशीरेवैषैतस्य कर्म्मण ऽआशिषमेवैतदा

* का० श्रौ० सू० ९. १०. ८, ९ ।

(१) शु० सं० अ० ७ क० १३ । (२) शु० सं० अ० ७ क० १८ ।

† का० श्रौ० सू० ९. १०. १० ।

‡ का० श्रौ० सू० ९. १०. ११ ।

$ का० श्रौ० सू० ९. १०. १२ क ।

(३) शु० सं० अ० ७ क० १३ । (४) शु० सं० अ० ७ क० १८ । (५) शु० सं० अ० ७ क० १३ । (६) शु० सं० अ० ७ क० १८ । (७) शु० सं० अ० ७ क० १४ ।

शास्ते ॥२२॥ अथाऽऽश्राव्याऽऽह । * प्रातः—प्प्रातः सवस्य शुक्रवतो मधुश्चुत ऽइन्द्राय सोमान्प्प्रस्थितान्प्प्रेष्येति व्वषट्कृते ऽद्ध्वर्य्युर्जुहोति तदनु प्प्रतिप्प्रस्थाता तदनु चमसाद्ध्वर्य्यवः ॥ २३ ॥ तौ वै पुरस्तात्तिष्ठन्तौ जुहुतः । चक्षुषी वा ऽएतौ तत्पुरस्ताद्वैतच्चक्षुषी धत्तस्तस्म्मादिमे पुरस्ताच्चक्षुषी ॥ २४ ॥ अभितो यूपं तिष्ठन्तौ जुहुतः । यथा वै नासिकैवं यूपस्तस्म्मादिमे ऽअभितो नासिकां चक्षुषी ॥ २५ ॥ तौ वै व्वषट्कृतौ सन्तौ मन्त्रेण हूयेते । एतेनो हैतौ तदुदश्नुवाते यदेनौ सर्व्वꣳ सवनमनुहूयते यद्वेवैतौ सर्व्वꣳ सवनमनुहूयत ऽएतौ वै प्प्रजापतेः प्प्रत्यक्षतमां चक्षुषी ह्येतौ सत्त्यं वै चक्षुः सत्त्यꣳ हि प्प्रजापतिस्तस्म्मादेनौ सर्व्वꣳ सवनमनुहूयते ॥ २६ ॥ † स जुहोति । 'सा [1]प्प्रथमा संस्कृतिर्व्विश्श्ववारा स प्प्रथमो व्वरुणो मित्त्रो ऽअग्निः । स प्प्रथमो बृहस्प्पतिश्चिकित्त्वाँस्तस्म्मा ऽइन्द्राय सुतमाजुहोत स्वाहे'ति ॥ २७ ॥ स यज्जुहोति । सा प्प्रथमा स प्प्रथम ऽइति शश्वद्ध वै रेतसः सिक्तस्य चक्षुषी ऽएव प्प्रथमे सम्भवतस्तस्म्माज्जुहोति सा प्प्रथमा स प्प्रथम ऽइति ॥ २८ ॥ अथ ‡ सम्प्रेष्यति । प्प्रैतु होतुश्चमसः प्प्र ब्रह्मणः प्प्रोद्गातॄणां प्र यजमानस्य प्प्रयन्तु सदस्यानाꣳ

---

* "आश्राव्याऽऽह प्रातः प्रातः सवस्य शुक्रवतो मधुश्चुत इन्द्राय सोमान्प्रस्थितान् प्रेष्येति" ( का० श्रौ० सू० ९. १०. १२ ख )।

† का० श्रौ० सू० ९. ११. १,२ ।

( १ ) शु० सं० अ० ७ क० १४–१५ ।

‡ का० श्रौ० सू० ९. ११. ३ ।

होत्राणां चमसाध्वर्य्यव ऽउपावर्त्तध्वꣳ शुक्रस्याऽभ्युन्नय-ध्वमिति सम्प्रैष ऽएवैष पर्य्येत्य प्प्रतिप्प्रस्थाताऽध्वर्य्योः पात्रे सꣳस्रवमवनयत्यत्र ऽएवैतदाद्यं बलिꣳ हारयति तमध्वर्य्युर्होतृचमसेऽवनयति भक्षाय * वषट्कर्त्तुर्हि भक्षः प्प्राणो वै वषट्कारः सोऽस्स्मादेतद्वषट्कुर्व्वतः पराङिवाऽभू-त्प्राणो वै भक्षस्तत्प्राणं पुनरात्त्मन्धत्ते ॥ २९ ॥ † अथ यदेते प्प्रतीची पात्रे न हरन्ति । हरन्त्यन्न्यान्ग्ग्रहाँश्च-क्षुषी ह्येते सꣳस्रवमेव होतृचमसेऽवनयति ॥ ३० ॥ अथ होत्राणां ‡ चमसानभ्युन्नयन्ति । हुतोच्छिष्टा वा ऽएते सꣳस्रवा भवन्ति नाऽलमाहुत्त्यै तानेवैतत्पुनराप्प्याययन्ति तथाऽलमाहुत्त्यै भवन्ति तस्स्माद्धोत्राणां चमसानभ्युन्नय-न्ति ॥ ३१ ॥ अथ होत्राः संख्याजयन्ति । होत्रा ह वै युक्ता देवेभ्यो यज्ञं वहन्ति ता ऽएवैतत्सन्तर्प्पयन्ति तृप्ताः प्प्रीता देवेभ्यो यज्ञं वहानिति तस्स्माद्धोत्राः संख्याजयन्ति ॥ ३२ ॥ स प्प्रथमायां वा होत्रायाम् । इष्टा-यामुत्तमायां ‡‡ वाऽनुमन्त्रयते '[1]तृम्प्पन्तु होत्रा मध्वो याः स्विष्टा याः सुप्प्रीताः सुहुता यत्स्वाहे'ति होत्राणामेवैषा

* अथ भक्षपरिभाषा—प्रतिप्रस्थात्रोः सर्वत्र होमाभिषवनिमित्तः सकृद्भक्षः, अनुवषट्कार-प्रयुक्तस्य होमस्य प्रतिपत्तिकर्मत्वात्तन्निमित्तभक्षणाभावस्तयोः । वषट्कर्त्तुस्तु प्रतिवषट्कारं भक्षणम्, तेनाऽनुवषट्कारसत्त्वे द्विर्भक्षः, तदभावे सकृत् । 'उद्गातृचमसं नाऽन्यो भक्षयेत्' इति निषेधात् तं चमसं तदन्यो न भक्षयेत् ( का० श्रौ० सू० वृ० ९. ११. १८ ) ।

† का० श्रौ० सू० ९. ११. ४,५ ।

‡ 'पञ्चसून्नयन्ति' का० श्रौ० सू० ९. ११. ६,७ ।

‡‡ का० श्रौ० सू० ९. ११. ९,१० ।

( १ ) शु० सं० अ० ७ क० १५ ।

तृप्तिरथैत्त्य प्प्रत्यङ्ङुपविश'त्त्ययाडग्नीदि'त्त्यग्नीद्ध्यत्र यजता-मुत्तमः संय्यजति तस्म्मादाहाऽयाडग्नीदिति ॥ ३३ ॥

द्वितीयाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥ (A)

माध्यन्दिनीये शतपथब्राह्मणे प्रथमः प्रपाठकः ॥ १ ॥

कण्डिकासंख्या ॥ १२६ ॥



[ आग्रयणग्रहः ]

आत्त्मा ह वा ऽअस्याऽऽग्रयणः । सोऽस्यैष सर्व्वमेव सर्व्वᳫ ह्ययमात्त्मा तस्म्मादनया गृह्णात्त्यस्यै हि स्स्थाली भवति स्स्थाल्या ह्येनं गृह्णाति सर्व्वं व्वा ऽइयᳫ सर्व्वमेष ग्रह-स्तस्म्मादनया गृह्णाति ॥१॥ पूर्ण्णं गृह्णाति । सर्व्वं व्वै पूर्ण्णᳫ सर्व्वमेष ग्रहस्तस्म्मात्त्पूर्ण्णं गृह्णाति ॥ २ ॥ व्विश्श्वेब्भ्यो देवे-ब्भ्यो गृह्णाति । सर्व्वं व्वै व्विश्श्वे देवाः सर्व्वमेष ग्रहस्तस्म्मा-द्विश्श्वेब्भ्यो देवेब्भ्यो गृह्णाति ॥ ३ ॥ सर्व्वेषु सवनेषु गृह्णाति । सर्व्वं व्वै सवनानि सर्व्वमेष ग्रहस्तस्म्मात्त्सर्व्वेषु सवनेषु गृह्णाति ॥ ४ ॥ स यदि राजोपदस्स्येत् । तमत ऽएव तन्न्वीरन्नतः प्प्रभावयेयुरात्त्मा वा ऽआग्रयण ऽआत्त्मनो वा ऽइमानि सर्व्वाण्ण्यङ्गानि प्प्रभवन्त्त्येतस्म्मादन्ततो हारियोजनं ग्रहं गृह्णाति तदात्त्मन्न्येवाऽस्यां प्रतिष्ठायामन्ततो यज्ञः प्प्रति-तिष्ठति ॥ ५ ॥ अथ यस्म्मादाग्रयणोनाम । यां व्वा ऽअमूं

(१) शु० सं० अ० ७ क० १५ ।

(A) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ५. २. १; काठ० २७. ७. ८; मै० सं० ४. ६. ३; तै० सं० २७. ७. ८ ।

ग्रावाणमाददानो व्वाचं यच्छत्यत्र वै साऽग्रेऽवदत्तथ्यत्साऽत्राऽग्रेऽवदत्तस्म्मादाग्रयणो नाम ॥ ६ ॥ रक्षोब्भ्यो वै तां भीषा व्वाचमयच्छन् । षड्वा ऽअतः प्प्राचो ग्रहान्न्गृह्णात्यथैष सप्तमः षड्वा ऽऋतवः संव्वत्सरस्य सर्व्वं वै संव्वत्सरः ॥ ७ ॥ तान्देवाः । सर्व्वस्मिन्न्विजितेऽभयेऽनाष्ट्रेऽत्राऽग्रे व्वाचमवदँस्तथो ऽएवैष ऽएताᳬं सर्व्वस्मिन्न्विजितेऽभयेऽनाष्ट्रेऽत्राऽग्रे व्वाचं वदति ॥ ८ ॥ अथाऽतो * गृह्णात्येव । 'ये देवासो दिव्व्येकादश स्त्थ पृथिव्व्यामध्ध्येकादश स्त्थ । अप्प्सुक्षितो महिनैकादश स्त्थ ते देवासो यज्ञमिमं जुषद्ध्वम् । उपयामगृहीतोऽस्याऽऽग्रयणोऽसि स्वाग्रयण' ऽइति व्वाचमेवैतदयातयाम्म्नीं करोति तस्म्मादनया समानः सद्द्विपरर्व्यासं वदत्यजामितायै जामि ह कुर्य्याद्यदाग्रयणोऽस्याग्रयणोऽसीति गृह्णीयात्तस्म्मादाहाऽऽग्रयणोऽसि स्वाग्रयण ऽइति ॥ ९ ॥ 'पाहि[2] यज्ञं पाहि यज्ञपतिमि'ति । व्वाचमेवैतदुत्सृष्टामाह गोपाय यज्ञमिति पाहि यज्ञपतिमिति व्वाचमेवैतदुत्सृष्टामाह गोपाय यजमानमिति यजमानो हि यज्ञपति'र्व्विष्णुस्[3]त्वामिन्द्रियेण पातु व्विष्णुं त्वं पाही'ति व्वाचमेवैतदुत्सृष्टामाह यज्ञो वै व्विष्णुर्य्यज्ञस्त्वां व्वीर्य्येण गोपायत्विति व्विष्णुं त्वं पाहीति व्वाचमेवैतदुत्सृष्टामाह यज्ञं त्वं गोपाये'त्य्यभि सवनानि पाही'ति तदेतं

(१) शु० सं० अ० ७ क० १९–२० ।

* "आग्रयणं द्वयोर्धारयोर्ये देवास इति" का० श्रौ० सू० ९. ६. १४ ।

(२) शु० सं० अ० ७ क० २० । (३) शु० सं० अ० ७ क० २० । (४) शु० सं० अ० ७ क० २० ।

ग्रहमाह सर्वाणि ह्येष सवनानि प्प्राति ॥ १० ॥ अथ * दशापवित्रमुपगृह्य हिङ्करोति । सा हैषा वागनुच्यमाना ततान तस्यां देवा वाचि तान्तायाᳶ हिङ्कारेणैव प्प्राणम-दधुᳬ प्प्राणो वै हिङ्कारᳬ प्प्राणो हि वै हिङ्कारस्तस्मादपि गृह्य नासिके न हिङ्कर्त्तुᳬ शक्नोति सैतेन प्प्राणेन सम-जिहीत यदा वै तान्तᳬ प्प्राणं लभतेऽथ स सञ्जिहीते तथो ऽएवैष ऽएतद्वाचि तान्तायाᳶ हिङ्कारेणैव प्प्राणं दधाति सैतेन प्प्राणेन सञ्जिहीते त्रिष्कृत्वो हिङ्करोति त्रिवृद्धि यज्ञᳬ ॥ ११ ॥ अथाऽऽह 'सोमᳬ पवत' ऽइति । स यामेवाऽमूं भीषाऽसुररक्षसेभ्यो न निरब्रुवँस्तामेवै-तत्सर्वस्मिन्न्विजितेऽभयेऽनाष्ट्रेऽत्र निराह तामाविष्करोति तस्मादाह सोमᳬ पवत ऽइति ॥१२॥ 'अस्म्मै ब्रह्मणेऽस्म्मै क्षत्राये'ति । तद् ब्रह्मणे च क्षत्राय चाऽऽहा'ऽस्म्मै सुन्न्वते यजमानाय पवत' ऽइति तद्यजमानायाऽऽह ॥ १३ ॥ तदाहुᳬ । एतावदेवोक्त्वा सादयेदेतावद्वा ऽइदᳬ सर्वं यावद् ब्रह्म क्षत्रं विडिन्द्राग्नी वा ऽइदᳬ सर्वं तस्मादेता-वदेवोक्त्वा सादयेदिति ॥ १४ ॥ तदु ब्रूयादेव भूयᳬ । 'इष ऽऊर्ज्जे पवत' ऽइति व्वृष्टयै तदाह यदाहेष ऽइत्यूर्ज्ज-ऽइति यो व्वृष्टादूर्ग्ग्रसो जायते तस्म्मै तदा'हाऽद्भ्य-

---

* "दशापवित्रेणाऽऽग्रयणमुपगृह्य त्रिर्हिङ्कृत्य सोमः पवत इति सकृच्छेषम्" ( का० श्रौ० सू० ९. ६. १५ )

( १ ) शु० सं० अ० ७ क० २१ । ( २ ) शु० सं० अ० ७ क० २१ । ( ३ ) शु० सं० अ० ७ क० २१ । ( ४ ) शु० सं० अ० ७ क० २१ । ( ५ ) शु० सं० अ० ७ क० २१ ।

ऽओषधीभ्यः पवत' ऽइति तदन्नयश्चौषधिभ्यश्चाऽऽह 'द्यावापृथिवीभ्यां पवत' ऽइति तदाभ्यां द्यावापृथिवीभ्यामाह यथोरिदꣳ सर्वमधि 'सुभूताय पवत' ऽइति साधवे पवत ऽइत्येवैतदाह ॥ १५ ॥ तदु हैक ऽआहुः । 'ब्रह्मवर्चसाय पवत' ऽइति तदु तथा न ब्रूयाद्यद्वा ऽआहाऽस्मै ब्रह्मण ऽइति तदेव ब्रह्मवर्चसायाऽऽह 'विश्वेभ्यस्त्वा देवेभ्य ऽएष ते योनिर्विश्वेभ्यस्त्वा देवेभ्य' ऽइति सादयति विश्वेभ्यो ह्येनं देवेभ्यो गृह्णाति तं वै मध्ये सादयत्यात्मा ह्यस्यैष मध्य ऽइव ह्ययमात्मा दक्षिणोक्थ्यस्थाली भवत्युत्तराऽऽदित्यस्थाली ॥ १६ ॥

द्वितीयाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥ (B)



[ उक्थ्यग्रहः ]

अयꣳ ह वा ऽअस्यैषोऽनिरुक्त ऽआत्मा यदुक्थ्यः । सोऽस्यैष ऽआत्मैवाऽऽत्मा ह्ययमनिरुक्तः प्राणः सोऽस्यैष ऽआयुरेव तस्मादनया गृह्णात्यस्यै हि स्थाली भवति स्थाल्या ह्येनं गृह्णात्यजरा हीयममृताऽजरꣳ ह्यमृतमायुस्तस्मादनया गृह्णाति ॥१॥ तं वै पूर्णं गृह्णाति । सर्वं वै तद्यत्पूर्णꣳ सर्वं तद्यदायुस्तस्मात्पूर्णं गृह्णाति ॥२॥ * तस्या-

( १ ) शु० सं० अ० ७ क० २१ । ( २ ) शु० सं० अ० ७ क० २१ । ( ३ ) आप० श्रौ० सू० १२. १५. ८ । ( ४ ) शु० सं० अ० ७ क० २१ ।

(B) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ५. २. २; क० सं० २७. ९; मै० सं० ४. ६. ४; तै० सं० ६. ४. ११ ।

* अत्र शतम् २४०० ॥

सावेव ध्रुव ऽआयुः। आत्मैवाऽस्यैतेन सꣳहितः पर्व्वाणि सन्ततानि तद्वा ऽअगृहीत ऽएवैतस्म्मादच्छावाकायोत्तमो ग्रहो भवति ॥ ३ ॥ अथ राजानमुपाऽवहरति। तृतीयं व्वसतीवरीणामवनयति तत्पर्व्व समैति प्प्रथममहोत्तरस्य सवनस्य करोत्युत्तमं पूर्व्वस्य स यदुत्तरस्य सनवस्य तत्पूर्व्वं करोति यत्पूर्व्वस्य तदुत्तमं तद्व्यतिषजति तस्म्मादिमानि पर्व्वाणि व्व्यतिषक्तानीदमित्थमतिहानमिदमित्थम् ॥ ४ ॥ एवमेव माध्यन्दिने सवने। अगृहीत ऽएवैतस्म्मादच्छावाकायोत्तमो ग्रहो भवत्यथ तृतीयं व्वसतीवरीणामवनयति तत्पर्व्व समैति प्प्रथममहोत्तरस्य सवनस्य करोत्युत्तमं पूर्व्वस्य स यदुत्तरस्य सवनस्य तत्पूर्व्वं करोति यत्पूर्व्वस्य तदुत्तमं तद्व्यतिषजति तस्म्मादिमानि पर्व्वाणि व्व्यतिषक्तानीदमित्थमतिहानमिदमित्थं तद्यदस्यैतेनाऽऽत्मा सꣳहितस्तेनाऽस्यैष ऽआयुः ॥५॥ सैषा कामदुघैव्वेन्द्रस्योद्धारः। त्रिब्भ्य ऽएवैनं * प्रातः सवन ऽउक्थेब्भ्यो व्विगृह्णाति त्रिब्भ्यो माध्यन्दिने सवने तत्षट्कृत्वः षड्वा ऽऋतवऽऋतवो वा ऽइमान्त्सर्व्वान्कामान्पचन्त्येतेनो हैषा काम-

* ज्योतिष्टोमीयप्रातःसवने—उपांशुः, अन्तर्यामः, ऐन्द्रवायवः, मैत्रावरुणः, आश्विनः, शुक्रः, मन्थी, आग्रयणः, उक्थ्यः, ध्रुवः, ( वैकल्पिको वैश्वानरः ) ऋतुग्रहौ, ऐन्द्राग्नः, वैश्वदेवश्चेति त्रयोदश ग्रहाः।

माध्यन्दिने सवने—शुक्रः, मन्थी, आग्रयणः, उक्थ्यः, मरुत्वतीयास्त्रयः, माहेन्द्रः, दधिग्रहश्चेति नव ग्रहाः।

तृतीयसवने—आदित्यः, सावित्रः, वैश्वदेवः, पात्नीवतः, हारियोजन इति पञ्च ग्रहाः। तत्र ग्रह शब्देन 'गृह्यत इति ग्रहः' इति कर्म व्युत्पत्त्या सोमरसः। 'गृह्यतेअस्मिन्' इति व्युत्पत्त्या च तदाधारभूतं पात्रमुच्यते। अत्र नवैव उलूखला ग्रहाः। आग्रयणः, उक्थ्यः, ध्रुवः, आदित्यः, इति चतस्रो मृन्मय्यः स्थाल्यः –स्थालीग्रहा इति यावत्।

दुघैवेन्द्रस्योद्धारः ॥ ६ ॥ तं वा ऽअपुरोरुक्कं गृह्णाति । उक्थꣳ हि पुरोरुग्गृग्घि पुरोरुगृग्घ्युक्थꣳ साम ग्रहोऽथ यदन्यज्जपति तद्यजुस्ता हैता ऽअभ्यर्द्ध ऽएवाऽग्र ऽऋग्भ्य ऽआसुरभ्यर्द्धो यजुर्भ्योऽभ्यर्द्धꣳ सामभ्यः ॥ ७ ॥ ते देवा ऽअब्रुवन् । हन्तेमा यजुःषु दधाम तथेयं बहुलतरेव विद्या भविष्यतीति ता यजुःष्वदधुस्तत ऽएषा बहुलतरेव विद्याऽभवत् ॥ ८ ॥ तं यदपुरोरुक्कं गृह्णाति । उक्थꣳ हि पुरोरुगृग्घि पुरोरुगृग्घ्युक्थꣳ स यदेवैनमुक्थेभ्यो विगृह्णाति तेनो हाऽस्यैष पुरोरुङ्मा-ऽभवति तस्मादपुरोरुक्कं गृह्णाति ॥ ९ ॥ अथाऽतो *गृह्णात्येव । 'उपयामगृहीतोऽसीन्द्राय त्वा बृहद्वते वयस्वत' ऽइतीन्द्रो वै यज्ञस्य देवता तस्मादाहेन्द्राय त्वेति बृहद्वते वयस्वत ऽइति वीर्यवत ऽइत्येवैतदाह यदाह बृहद्वते वय-स्वत ऽइ'[2]त्युक्थाव्यं गृह्णामी'त्युक्थेभ्यो ह्येनं गृह्णाति '[3]यत्त ऽइन्द्र बृहद्वय' ऽइति यत्त ऽइन्द्र वीर्यमित्येवैतदाह 'तस्मै त्वा[4] विष्णवे त्वे'ति यज्ञस्य ह्येनमायुषे गृह्णाति तस्मादाह तस्मै त्वा विष्णवे त्वे'त्येष[5] ते योनिरुक्थे-भ्यस्त्वे'ति सादयत्युक्थेभ्यो ह्येनं गृह्णाति ॥ १० ॥ तं विगृह्णाति । 'देवेभ्यस्त्वा[6] देवाव्यं यज्ञस्याऽऽयुषे गृह्णा-मी'ति प्रशासनꣳ स कुर्य्याद्य ऽएवं कुर्य्याद्यथादेवतं त्वेव विगृह्णीयात् ॥ ११ ॥ † 'मित्रावरुणाभ्यां[7] त्वा । देवाव्यं

* का० श्रौ० सू० ९. ६. २० ।

( १ ) शु० सं० अ० ७ क० २२ । ( २ ) शु० सं० अ० ७ क० २२ । ( ३ ) शु० सं० अ० ७ क० २२ । ( ४ ) शु० सं० अ० ७ क० २२ । ( ५ ) शु० सं० अ० ७ क० २२ । ( ६ ) शु० सं० अ० ७ क० २२ ।

† का० श्रौ० सू० ९. १४. ९ ।

( ७ ) शु० सं० अ० ७ क० २३ ।

यज्ञस्याऽऽयुषे गृह्णामी'त्येव मैत्रावरुणाय मैत्रावरुणीषु हि तस्मै स्तुवते मैत्रावरुणीरनुशꣳसति मैत्रावरुण्या यजति ॥ १२ ॥ * 'इन्द्राय त्वा । देवाव्यं यज्ञस्याऽऽयुषे गृह्णामी' त्येव ब्राह्मणाच्छꣳसिन ऽऐन्द्रीषु हि तस्मै स्तुवत ऽऐन्द्रीरनुशꣳसत्यैन्द्र्या यजति ॥ १३ ॥ 'इन्द्राग्निभ्यान्त्वा देवाव्यं यज्ञस्याऽऽयुषे गृह्णामी'त्येवाऽच्छावाकायैन्द्राग्नीषु हि तस्मै स्तुवत ऽऐन्द्राग्नीरनुशꣳसत्यैन्द्राग्न्या यजतीन्द्राय त्वेन्द्राय त्वेत्येव माध्यन्दिने सवन ऽऐन्द्रꣳ हि माध्यन्दिनꣳ सवनम् ॥१४॥ तदु ह चरकाद्ध्वर्यवो विगृह्णन्ति । 'उपयामगृहीतोऽसि देवेभ्यस्त्वा देवाव्यमुक्थेभ्य ऽउक्थाव्यं मित्रावरुणाभ्यां जुष्टं गृह्णाम्येष ते योनिर्मित्रावरुणाभ्यां त्वे'ति सादयति पुनर्हविरसीति स्थालीमभिमृशति ॥ १५ ॥ 'उपयामगृहीतोऽसि । देवेभ्यस्त्वा देवाव्यमुक्थेभ्य-ऽउक्थाव्यमिन्द्राय जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वे'ति सादयति पुनर्हविरसीति स्थालीमभिमृशति ॥ १६ ॥ 'उपयामगृहीतोऽसि । देवेभ्यस्त्वा देवाव्यमुक्थेभ्य-ऽउक्थाव्यमिन्द्राग्निभ्यां जुष्टं गृह्णाम्येष ते योनिरिन्द्राग्निभ्यान्त्वे'ति सादयति नाऽत्र पुनर्हविरसीति स्थालीमभिमृशतीन्द्राय त्वेन्द्राय त्वेत्येव माध्यन्दिने सवन-ऽऐन्द्रꣳ हि माध्यन्दिनꣳ सवनं द्विर्हि पुनर्हविरसीति

* का० श्रौ० सू० ९. १४. १५ ।

(१) शु० सं० अ० ७ क० २३ । (२) शु० सं० अ० ७ क० २३ । (३) शु० सं० अ० ७ क० २३ । (४) शु० सं० अ० ७ क० २३ । (५) शु० सं० अ० ७ क० २३ ।

स्थालीमभिमृशति तूष्णीं तृतीयं निदधाति ॥ १७ ॥ तं वै नोपयामेन गृह्णीयात् । न योनौ सादयेदग्रे ह्येवैष-ऽउपयामेन गृहीतो भवत्यग्रे योनौ सन्नोऽजामितायै जामि ह कुर्याद्यदेनमत्राऽप्युपयामेन गृह्णीयाद्योनौ सादयेदथ यत्पुनर्हविरसीति स्थालीमभिमृशति पुनर्ह्यस्यै गृहं ग्रहीष्यन्भवति न तदाद्रियेत तूष्णीमेव निदध्यात् ॥ १८ ॥(C)

द्वितीयाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥



[ ध्रुवग्रहः ]

अयꣳ ह वा ऽअस्यैष प्राणः । योऽयं पुरस्तात्स वै वैश्वानर ऽएवाऽथ योऽयं पश्चात्स ध्रुवस्तौ स्म्मैतौ द्वावेवाऽग्रे ग्रहौ गृह्णन्ति ध्रुववैश्वानराविति तयोरयमप्येतर्ह्यन्यतर ऽएव गृह्यते ध्रुव ऽएव स यदि तं चरकेभ्यो वा यतो वाऽनुब्रुवीत यजमानस्य तं चमसेऽवनयेदथैतमेव होतृचमसे ॥ १ ॥ यद्वा ऽअस्याऽवाचीनं नाभेः । तदस्यैष-ऽआत्मनः सोऽस्यैष ऽआयुरेव तस्म्मादनया गृह्णात्यस्यै हि स्थाली भवति स्थाल्या ह्येनं गृह्णात्यजरा हीयममृताजरꣳ ह्यमृतमायुस्तस्म्मादनया गृह्णाति ॥ २ ॥ तं वै पूर्णं गृह्णाति । सर्वं वै तद्यत्पूर्णꣳ सर्वं तद्यदायुस्तस्म्मात्पूर्णं गृह्णाति ॥ ३ ॥ वैश्वानराय गृह्णाति । संवत्सरो वै वैश्वानरः संवत्सर ऽआयुस्तस्म्माद्वैश्वानराय गृह्णाति ॥ ४ ॥

(C) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ५. २. ३; कठ० २७. १०; तै० सं० ६. ५. १; मै० सं० ३. ६. ५ ।

स प्प्रातःसवने गृहीतः । एतस्म्मात्सालादुपशेते तदेनᳬ सर्व्वाणि सवनान्यतिनयति ॥ ५ ॥ तन्न स्तूयमानेऽवनयेत् । न ह संव्वत्सरं यजमानोऽतिजीवेद्यत्स्तूयमानेऽवनयेत् ॥६॥ तᳬ शस्यमानेऽवनयति । तदेनं द्वादशᳬ स्तोत्रमतिनयति तथा परम्परमायुः समश्नुते तथो ह यजमानो ज्योग्जीवति तस्म्माद् ब्राह्मणोऽग्निष्टोमसत्स्यादेतस्य होमान्न सर्प्पेन्न प्प्रस्त्रावयेत तथा सर्व्वमायुः समश्नुत ऽआयुर्व्वा ऽअस्यैष तथा सर्व्वमायुरेति ॥ ७ ॥ यद्वा ऽअस्याऽवाचीनं नाभेः । तदस्यैष ऽआत्मनः स यत्पुरैतस्य होमात्सर्प्पेद्वा प्प्र वा स्त्रावयेत ध्रुवᳬ हाऽवमेहेन्नेद्ध्रुवमवमेहानीति तस्म्माद्वा ऽअग्निष्टोमसद्भवति तद्वै तद्यजमानऽएव यजमानस्य ह्येष तदात्मनः ॥ ८ ॥ स वा ऽअग्निष्टोमसद्भवति । यशो वै सोमस्तस्म्माद्यश्च सोमे लभते यश्च नोभावेवाऽऽगच्छतो यश ऽएवैतद्दृष्टुमागच्छन्ति तद्वाऽएतद्यशो ब्राह्मणाः सम्प्रसृप्प्याऽऽत्मन्दधते यद्भक्षयन्ति स ह यश ऽएव भवति य ऽएवं विद्वान्भक्षयति ॥ ९ ॥ ते वा ऽएते । सर्प्पन्त ऽएवाऽग्निष्टोमसद्येतद्यशः सन्निधाय सर्प्पन्ति ते पराञ्चो यशसो भवन्ति तदेष परिगृह्यैव पुनरात्मन्न्यशो धत्ते तेषाᳬ हैष ऽएव यशस्वितमो भूत्वा प्प्रैति य ऽएवं विद्वानग्निष्टोमसद्भवति ॥ १० ॥ देवाश्च वा ऽअसुराश्च । उभये प्प्राजापत्त्याः पस्प्पृधिर ऽएतस्मिन्न्यज्ञे प्प्रजापतौ पितरि संव्वत्सरेऽस्म्माकमयं भविष्यत्त्यस्म्माकमयं भविष्यतीति ॥ ११ ॥

तृतो देवाः । अर्च्चन्तः श्राम्म्यन्तश्चेरुस्त ऽएतदग्निष्टोम-
सद्यं ददृशुस्त ऽएतेनाऽग्निष्टोमसद्येन सर्वं यज्ञः समवृ-
ञ्जताऽन्तरायन्नसुरान्यज्ञात्तथो ऽएवैष ऽएतेनाऽग्निष्टोमस-
द्येन सर्वं यज्ञः संव्वृङ्क्तेऽन्तरेति सपत्नान्यज्ञात्तस्माद्वा-
ऽअग्निष्टोमसद्भवति ॥ १२ ॥ तं गृहीत्वोत्तरे । हविर्द्धाने
सादयति प्प्राणा वै ग्रहा नेत्प्राणान्मोहयानीत्युपकीर्ण्णे वा-
ऽइतरान्ग्रहान्सादयत्यथैतं व्व्युह्य न तृणं चनाऽन्तर्द्धाय
॥ १३ ॥ यद्वा ऽअस्योर्द्ध्वं नाभेः । तदस्यैत ऽआत्मन ऽउपरीव
वै तद्यदूर्द्ध्वं नाभेरुपरीवैतद्यदुपकीर्ण्णं तस्मादुपकीर्ण्णे साद्य-
त्यथैतं व्व्युह्य न तृणं चनाऽन्तर्द्धाय ॥ १४ ॥ यद्वा ऽअस्या-
ऽवाचीनं नाभेः । तदस्यैष ऽआत्मनोऽध ऽइव वै तद्यदवा-
चीनं नाभेरध ऽइवैतद्यद्व्युह्य न तृणं चनाऽन्तर्द्धाय तस्मा-
देतं व्व्युह्य न तृणं चनाऽन्तर्द्धाय सादयति ॥ १५ ॥ एष
वै प्प्रजापतिः । स ऽएष यज्ञस्तायते यस्मादिमाः प्प्रजाः
प्प्रजाता ऽएतम्वेवाऽप्प्येतर्ह्यनु प्प्रजायन्ते स यानुपकीर्ण्णे
सादयति तस्माद्यास्ताननु प्प्रजाः प्प्रजायन्ते ता ऽअन्ये-
नाऽऽत्मनोऽस्यां प्रतितिष्ठन्ति या वै शफैः प्प्रतितिष्ठन्ति
ता ऽअन्न्येनाऽऽत्मनोऽस्यां प्रतितिष्ठन्त्यथ यदेतं व्व्युह्य
न तृणं चनाऽन्तर्द्धाय सादयति तस्माद्या ऽएतमनु प्प्रजाः
प्प्रजायन्ते ता ऽआत्मनैवाऽस्यां प्रतितिष्ठन्ति मनुष्याश्च
श्वापदाश्च ॥ १६ ॥ तद्वा ऽएतत् । अस्या ऽएवाऽन्न्यदुत्तरं
करोति यदुपकिरति स यानुपकीर्ण्णे सादयति तस्मा-
द्यास्ताननु प्प्रजाः प्प्रजायन्ते ता ऽअन्न्येनैवाऽऽत्मनोऽस्यां

प्रतितिष्ठन्ति शफैः ॥ १७ ॥ तद्वा ऽएतत् । आहवनीये जुह्वति पुरोडाशं धानाः करम्भं दध्यामिक्षामिति तद्यथा मुख ऽआसिञ्चेदेवं तदथैष ऽएकरूप ऽउपशेत ऽआप-ऽइवैव तस्माद्यदनेन मुखेन नानारूपमशनमश्नात्यथैतेन प्प्राणेनैकरूपमेव प्प्रस्त्रावयतेऽप ऽइवैवाऽथ यस्माद्ध्रुवो नाम ॥ १८ ॥ देवा ह वै यज्ञं तन्न्वानाः । तेऽसुररक्षसेभ्य-ऽआसङ्गाद्बिभयाञ्चक्रुस्तान्दक्षिणतोऽसुररक्षसान्न्यासेजुस्तेषा-मेतान्दक्षिणान्न्गृहानुज्जग्घ्नुरप्प्येतद्दक्षिणं हविर्द्धानमुज्जग्घ्नुरथैतमेव न शेकुरुद्धन्तुं तदुत्तरमेव हविर्द्धानं दक्षिणं हविर्द्धानमदृंहन्ह तद्यदेतं न शेकुरुद्धन्तुं तस्माद् ध्रुवो नाम ॥ १९ ॥ तं वै गोपायन्ति । शिरो वा ऽएष ऽएतस्यै गायत्र्यै यज्ञो वै गायत्री द्वादश स्तोत्राणि द्वादश शस्त्राणि तच्चतुर्विंशतिश्चतुर्विंशत्यक्षरा वै गायत्री तस्या-ऽएष शिरः श्रीर्वै शिरः श्रीर्हि वै शिरस्तस्माद्योऽर्द्धस्य श्रेष्ठो भवत्यसावमुष्यार्द्धस्य शिर ऽइत्त्याहुः श्रेष्ठो ह व्व्यथेत यदेष व्व्यथेत यजमानो वै श्रेष्ठो नेद्यजमानो व्व्यथाता-ऽइति तस्माद्वै गोपायन्ति ॥२०॥ वत्सो वा ऽएषः । एतस्यै गायत्र्यै यज्ञो वै गायत्री द्वादश स्तोत्राणि द्वादश शस्त्राणि तच्चतुर्विंशतिश्चतुर्विंशत्यक्षरा वै गायत्री तस्या ऽएष वत्सस्तं यद् गोपायन्ति गोपायन्ति वा ऽइमान्न्वत्सान्दोहाय यदिदं पयो दुह्र ऽएवमियं गायत्री यजमानाय सर्वान्न्कामान्दोहाता ऽइति तस्माद् वै गोपायन्ति ॥ २१ ॥ अथ यद्ध्वर्युश्च प्प्रातिप्प्रस्त्थाता च । निश्च क्रामतः प्प्र

च पद्येते यथा बद्धवत्सोपाऽऽचरेदेवमेतं गृहमुपाऽऽचरतस्तमवनयति गायत्रीमेवैतत्प्रस्नावयति प्प्रत्तेयं गायत्री यजमानाय सर्वान्कामान्दोहाता ऽइति तस्माद्वा ऽअवनयति ॥ २२ ॥ * सोऽवनयति । 'ध्रुवं[1] ध्रुवेण मनसा वाचा सोममवनयामी'ति गृह्णामीति वा'ऽथो[2] न ऽइन्द्र ऽइद्विशोऽसपत्नाः समनसस्करादि'ति यथा न ऽइन्द्र इमाः प्प्रजा विशः श्रियै यशसेऽन्नाद्यायाऽसपत्नाः सम्मनसः करवादित्येवैतदाह ॥ २३ ॥ अथाऽतो † गृह्णात्येव । 'मूर्द्धानं[3] दिवो ऽअरतिं पृथिव्व्या व्वैश्वानरमृत ऽआ जातमग्निम् । कविꣳ सम्म्राजमतिथिं जनानामासन्नापात्रं जनयन्त देवाः । उपयामगृहीतोऽसि ध्रुवोऽसि ध्रुवक्षितिर्ध्रुवाणां ध्रुवतमोऽच्च्युतानामच्च्युतक्षित्तम ऽएष ते योनिर्व्वैश्वानराय त्वे'ति सादयति व्व्यूह्य न तृणं चनाऽन्तर्द्धाय व्वैश्वानराय ह्येनं गृह्णाति ॥ २४ ॥ (D)

द्वितीयाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥



[ विप्रुड्ढोमः ]

गृहान्गृहीत्त्वा । उपनिष्क्रम्म्य व्विप्प्रुषाꣳ होमं जुहोति तद्यद्विप्प्रुषाꣳ होमं जुहोति या ऽएवाऽस्याऽत्र

* 'ध्रौवꣳ होतृचमसेऽवनयति ध्रुवन्ध्रुवेणेति' ।

( १ ) शु० सं० अ० ७ क० २५ । ( २ ) शु० सं० अ० ७ क० २५ ।

† का० श्रौ० सू० ९. ६. २१ ।

( ३ ) शु० सं० अ० ७ क० २४,२५ ।

( D ) एतद्ब्राह्मणस्थाविषयाअन्यत्राऽप्युपलभ्यन्ते यथा—का०श० ५. २. ४; क० सं० २८ १; कपि० ४४. १; तै० सं० ६. ५. २; मै० सं० ४. ६. ६ ।

विप्रुष स्कन्दन्ति ता ऽएवैतदाहवनीये स्वगाकरोत्याहवनीयो ह्याहुतीनां प्रतिष्ठा तस्माद्विप्रुषाᳬं होमं जुहोति ॥ १ ॥ स * जुहोति । 'यस्ते[1] द्रप्स स्कन्दति यस्ते ऽअᳫशुरि'ति यो वै स्तोक स्कन्दन्ति स द्रप्सस्तत्तमाह यस्ते ऽअᳫशुरिति तदᳫशुमाह 'ग्रावच्च्युतो[2] धिषणयोरुपस्थादि'ति ग्राव्णा हि च्च्युतोऽधिषवणाभ्याᳬं स्कन्द'[3]त्यध्वर्य्योर्वा परि वा यः पवित्रादि'त्यध्वर्य्योर्वा हि पाणिभ्याᳬं स्कन्दति पवित्राद्वा 'तन्ते[4] जुहोमि मनसा वषट्कृतᳬं स्वाहे'ति तद्यथा वषट्कृतᳫ हुतमेवमस्यैतद्भवति ॥ २ ॥ अथ स्तीर्णायै वेदेः । द्वे तृणे ऽअध्वर्य्युरादत्ते तावध्वर्य्यू प्प्रथमौ प्प्रतिपद्येते प्प्राणोदानौ यज्ञस्याऽथ प्प्रस्तोता वागेव यज्ञस्याऽथोद्गाताऽऽत्मैव प्प्रजापतिर्य्यज्ञस्याऽथ प्प्रतिहर्त्ता भिषग्वा व्व्यानो वा ॥ ३ ॥ ताञ्वा ऽएतान् । पञ्चर्त्विजो यजमानोऽन्वारभत ऽएतावान्वै सर्वो यज्ञो यावन्त ऽएते पञ्चर्त्विजो भवन्ति पाङ्क्तो वै यज्ञस्तद्यज्ञमेवैतद्यजमानोऽन्वारभते ॥ ४ ॥ अथाऽन्यतरत्तृणम् । † चात्त्वालमभि प्प्राऽस्यति 'देवानामु[5]त्क्रमणमसी'ति यत्र वै देवा यज्ञेन स्वर्ग्गं लोकᳫ समाश्नुवत त ऽएतस्माच्चात्त्वा-

---

* का० श्रौ सू० ९. ६. २८ ।

(१) शु० सं० अ० ७ क० २६। (२) शु० सं० अ० ७ क० २६; 'ग्रावच्युतः' इत्यत्र 'बाहुच्युतः' इति तैत्तिरीयपाठः। (३) शु० सं० अ० ७ क० २६। (४) शु० सं० अ० ७ क० २६।

† का० श्रौ० सू० ९. ६. ३२।

(५) शु० सं० अ० ७ क० २६।

लादूर्ध्वाः स्वर्ग्गं लोकमुपोदक्रामँस्तद्यजमानमेवैतत्स्वर्ग्यं पन्थानमनु संख्यापयति ॥ ५ ॥ अथाऽन्न्यतरत्तृणम् । पुरस्तादुद्गातृणामुपाऽस्यति तूष्णीमेव स्तोमो वा ऽएष प्प्रजापतिर्य्यदुद्गातारः स ऽइदꣳ सर्वं स्युत ऽइदꣳ सर्वꣳ सम्भवति तस्म्माऽएवैतत्तृणमपि दधाति तथो हाऽद्धर्य्युं न युते नैनꣳ सम्भवत्यथ यदा जपन्ति जपन्ति ह्यत्रोद्गातारः ॥ ६ ॥ * अथ स्तोत्रमुपाकरोति । 'सोमꣳ पवत' ऽइति स वै परागेव स्तोत्रमुपाकरोति पराञ्च स्तुवते देवान्न्वा ऽएतानि स्तोत्राण्ण्यब्भ्युऽऽपावृत्तानि † यत्पवमानाः पराञ्चो ह्येतैर्द्देवाः स्वर्ग्गं लोकꣳ समाश्नुवत तस्म्मात्परागेव स्तोत्रमुपाकरोति पराञ्च स्तुवते ॥ ७ ॥ उपावर्त्तद्ध्वमिति वा ऽअन्न्यानि स्तोत्राणि । अब्भ्यावर्त्तं धुर्य्यैं स्तुवत ऽइमा वै प्प्रजा ऽएतानि स्तोत्राण्ण्यब्भ्युपाऽऽवृत्तास्तस्म्मादिमाः प्प्रजाः पुनरब्भ्यावर्त्तं प्रजायन्ते ॥ ८ ॥ अथ यदत्र बहिष्पवमानेन स्तुवते । अत्र ह वा ऽअसावग्र ऽआदित्य ऽआस तमृतवः परिगृह्यैवाऽत ऽऊर्द्ध्वाः स्वर्ग्गं लोकमुपोदक्रामन्त्स ऽएष ऽऋतुषु प्प्रतिष्ठितस्तपति तथो ऽएवैतदृत्विजो यजमानं परिगृह्यैवाऽत ऽऊर्द्ध्वाः स्वर्ग्गं लोकमुपोत्क्रामन्ति तस्म्मादत्र बहिष्पवमानेन स्तुवते ॥ ९ ॥ नौर्हं वा ऽएषा स्वर्ग्या । यद्बहिष्पवमानं तस्या ऽऋत्विज ऽएव स्फ्याश्चाऽरित्राश्च

* का० श्रौ० सू० ९. ६. ३४ ।

(१) शु० सं० अ० ७ क० २६ ।

† "कयानश्चित्र इत्याद्यासु नवसु गायत्रीच्छन्दस्कासु ऋक्षु ( ऋ० ३. ६. २४, २५ ) गीयमानं स्तोत्रं पवमानमित्युच्यते" ।

स्वर्ग्गस्य लोकस्य सम्पारणास्तस्या ऽएक ऽएव मज्जयिता य ऽएव निन्द्यः स यथा पूर्ण्णामभ्यारुह्य मज्जयेदेवꣳ हैनाꣳ स मज्जयति तद्वै सर्व्व ऽएव यज्ञो नौः स्वर्ग्या तस्मादु सर्व्वस्मादेव यज्ञान्निन्द्यं परिबिबाधिषेत ॥ १० ॥ * अथ स्तुत ऽएतां व्वाचं वदति । अग्नीदग्नीन्विहर बर्हिः स्तृणीहि पुरोडाशाँ२ अलङ्कुरु पशुनेहीति विहरत्यग्नीदग्नीन्त्समिन्ध ऽएवैनानेतत्स्तृणाति बर्हिः स्तीर्ण्णे बर्हिषि समिद्धे देवेभ्यो जुहवानीति पुरोडाशाँ२ ऽअलङ्कुर्व्विति पुरोडाशैर्हि प्रच-रिष्यन्भवति पशुनेहीति पशुꣳ ह्युपाकरिष्यन्भवति ॥ ११ ॥ अथ पुनः प्रपद्य । आश्विनं ग्रहं गृह्णात्याश्विनं ग्रहं गृहीत्वोपनिष्क्रम्य यूपं परिव्ययति परिवीय यूपं पशुमुपाकरोति रसमेवाऽस्मिन्नेतद्दधाति ॥ १२ ॥ [ अर्धप्रपाठकः ॥७०॥ ] स प्रातःसवन ऽआलब्धः । आ तृतीयसवनाच्छ्रप्यमाण ऽउपशेते सर्व्वस्मिन्नेवैतद्यज्ञे रसन्दधाति सर्व्वꣳ ह्यज्ञः रसेन प्रसजति ॥ १३ ॥ तस्मा-दाग्नेयमग्निष्टोम ऽआलभेत । तद्धि सलोम यदाग्नेयमग्नि-ष्टोम ऽआलभेत यद्युक्थ्यः स्यादैन्द्राग्नं द्वितीयमालभेतैन्द्रा-ग्नानि ह्युक्थानि यदि षोडशी स्यादैन्द्रं तृतीयमालभेतैन्द्रो हि षोडशी यद्यतिरात्रः स्यात्सारस्वतं चतुर्थमालभेत वाग्वै सरस्वती योषा वै वाग्योषा रात्रिस्तद्यथायथं यज्ञ-क्रतून्व्यावर्त्तयति ॥ १४ ॥ अथ सवनीयैः पुरोडाशैः प्रचरति । देवो वै सोमो दिवि हि सोमो व्वृत्रो वै सोम-

* का० श्रौ० सू० ९. ७. ४ ।

ऽआसीत्तस्यैतच्छरीरं यद्विरयो यदश्मानस्तदेषोऽशाना नामौ-
षधिर्ज्जायत ऽइति ह स्म्माऽऽह श्वेतकेतुरौद्दालकिस्तामेत-
दाहृत्याऽभिषुण्णवन्तीति ॥ १५ ॥ स यत्पशुमालभते । रस-
मेवाऽस्मिन्नेतद्दधात्यथ यत्सवनीयैः पुरोडाशैः प्प्रचरति
मेधमेवाऽस्मिन्नेतद्दधाति तथो हाऽस्यैष सोम ऽएव भवति
॥ १६ ॥ सर्व्वं ऽऐन्द्रा भवन्ति । इन्द्रो वै यज्ञस्य देवता
तस्म्मात्सर्व्वे ऽऐन्द्रा भवन्ति ॥ १७ ॥ अथ यत्पुरोडाशः ।
धानाः करम्भोदध्यामिक्षेति भवति या यज्ञस्य देवतास्ताः
सुप्प्रीता ऽअसन्निति ॥ १८ ॥ इदं वा ऽअपूपमशित्वा
कामयते । धानाः खादेयं करम्भमश्नीयान्दध्यश्नीयामा-
मिक्षामश्नीयामिति ते सर्व्वे कामा या यज्ञस्य देवतास्ताः
सुप्प्रीता ऽअसन्नित्यथ यदेषा प्प्रातःसवन ऽएव मैत्रा-
वरुणी पयस्याऽवक्लृप्ता भवति नेतरयोः सवनयोः ॥ १९ ॥
गायत्री वै प्प्रातःसवनं वहति । त्रिष्टुम्माध्यन्दिनꣳ सवनं
जगती तृतीयसवनं तद्वा ऽअनेकाकिन्न्येव त्रिष्टुम्माध्य-
न्दिनꣳ सवनं वहतिं गायत्र्या च बृहत्या चाऽनेकाकिनी
जगती तृतीयसवनं गायत्र्योष्णिहककुब्भ्यामनुष्टुभा ॥२०॥
गायत्र्येवैकाकिनी प्प्रातःसवनं वहति । सैताब्भ्यां पङ्क्ति-
ब्भ्याꣳ स्तोत्रपङ्क्त्या च हविष्पङ्क्त्या च चत्त्वार्य्याज्यानि
बहिष्पवमानं पञ्चमं पञ्च परापङ्क्तिः सैतया स्तोत्रपङ्क्त्याऽने-
काकिनी गायत्री प्प्रातःसवनं वहति ॥२१॥ इन्द्रस्य पुरोडाशः ।
हर्य्योर्द्धानाः पूष्ण्णः करम्भः सरस्वत्यै दधि मित्त्रावरुणयोः
पयस्या पञ्चपदा पङ्क्तिः सैतया हविष्पङ्क्त्याऽनेकाकिनी

गायत्री प्प्रातःसवनं वहत्त्येतस्या ऽएव पङ्क्तेः सम्पदः कामाय प्प्रातःसवन ऽएवैषा मैत्रावरुणी पयस्याऽवक्लृप्ता भवति नेतरयोः सवनयोः ॥ २२ ॥ (E)

द्वितीयाध्याये पञ्चमं ब्राह्मणम् ॥ ५ ॥

इति द्वितीयोऽध्यायः ॥ २ ॥



[ ऋतुग्रहैन्द्राग्नवैश्वदेवग्रहाः ]

भक्षयित्त्वा समुपहूताः स्स्म ऽइत्त्युकत्त्वोत्तिष्ठति । पुरोडाशबृगलमादाय तद्यत्रैतदुपसन्नोऽच्छावाकोऽन्वाह तदस्स्मै *पुरोडाशबृगलं पाणावादधदाहाऽच्छावाक वदस्व यत्ते वाद्यमित्त्यहीयत वा ऽअच्छावाकः ॥ १ ॥ तमिन्द्राग्नीऽअनु समतनुताम् । प्रजानां प्रजात्त्यै तस्स्मादैन्द्राग्नोऽच्छावाकः स ऽएतेन च हविषा यदस्स्मा ऽएतत्पुरोडाशबृगलं पाणावादधात्त्येतेन चाऽऽर्षेयेण यदेतदन्वाह तेनाऽनु समश्नुते ॥ २ ॥ स वै सन्नेऽच्छावाके । ऋतुग्रहैश्चरति तद्यत्सन्नेऽच्छावाक ऽऋतुग्रहैश्चरति मिथुनं वा ऽअच्छावाक ऽऐन्द्राग्नो ह्यच्छावाको द्वौ हीन्द्राग्नी द्वन्द्वꣳ हि मिथुनं प्रजननꣳ सऽएतस्स्मान्मिथुनात्प्रजननादृतून्त्संवत्त्सरं प्रजनयति ॥ ३ ॥ यद्वेव सन्नेऽच्छावाके । † ऋतुग्रहैश्चरति सर्व्वं वा ऽऋतवः संवत्त्सरः सर्व्वमेवैतत्प्रजनयति तस्स्मात्सन्नेऽच्छावाक ऽऋतु-

(E) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ५. ३. ११ ।

* अच्छावाकस्य पाणौ पुरोडाश( बृगलं )शकलं प्रक्षिपन् अच्छावाक ! वदस्व यत्ते वाद्यमिति ब्रूयादित्यर्थः ( सा० भा० ) ।

† का० श्रौ० सू० ९. १३. १ ।

त्स्वाहे॑ति ॥१२॥ अ॒ग्नेर्ह॑ वै॒ दे॒वाः । या॒वद्वा या॒वद्वा॒ऽप्स्वु प्प्र॒वे॒शयाञ्च॒क्रुर्न्नेद्द॒तो नाष्ट्रा र॒क्षाᳬस्युपो॒त्तिष्ठा॒नित्त्य॒ग्निर्हि र॒क्ष॒सामपहन्ता त॒मेत॒या च॒ समि॒धैत॒या चा॒ऽऽहुत्त्या स॒मिन्धे स॒मिद्धे दे॒वेभ्यो जुहवानीति ॥१३॥ अ॒थाऽपरं च॒तुर्ग्गृहीतमा॒ज्यं गृ॒हीत्त्वा । आश्रा॒व्याऽऽह समि॒धो य॒जेति सो॒ऽपबर्हिषश्च॒तु॒रः प्प्रयाजा॒न्यजति प्प्रजा वै॒ बर्हिर्व्वरु॒णयो॒ वा॒ ऽअवभृथो ने॒त्प्रजा व्वरुणो गृह्णा॒दिति त॒स्मादु॒पबर्हिषश्चतु॒रः प्प्रयाजा॒न्यजति ॥ १४ ॥ अ॒थ * व्वारुण ऽए॒ककपालः पुरो॒डाशो भवति । यो वा॒ ऽअस्य रसो॒ऽभूद्दा॒हुतिभ्यो वा॒ ऽअस्य त॒मजीजनदू॒थैतच्छरीरं त॒स्मिन्न र॒सो॒ऽस्ति र॒सो वै॒ पुरोडा॒शस्त॒द॒स्मिन्नेतः र॒सन्द॒धाति त॒दे॒नमेते॒न र॒सेन स॒ङ्गमयति त॒दे॒नम॒तो जनयति स॒ ऽए॒नं जात॒ ऽएव स॒ञ्जनयति त॒स्माद्वारुण ऽए॒ककपालः पुरो॒डाशो भवति ॥ १५ ॥ स ऽआ॒ज्यस्योपस्ती॒र्य्य । पुरो॒डाशस्या॒ऽवद्यन्नाह व्वरुणाया॒ऽनुब्रूहीत्य॒त्र है॒क ऽऋजीषस्य द्विर्॒वद्यन्ति त॒दु त॒था न॒ कुर्य्याच्छरीरं व्वा॒ ऽए॒तद्भवति ना॒ऽलमा॒हुत्त्यै द्विर्॒वद्यति सकृ॒द॒भिघारयति प्प्रत्य॒नक्त्यवदा॒ने ऽआश्रा॒व्याऽऽह व्वरुणं य॒जेति व्वषट्कृ॒ते जुहोति ॥ १६ ॥ अ॒थाऽऽज्यस्यो॒पस्ती॒र्य्य । पुरो॒डाशमवदु॒धदा॒हाऽग्नीव॒रुणाभ्यामनु॒ब्रूहीति त॒त्स्विष्टकृ॒ते स॒ य॒न्नाऽग्नय ऽइत्त्या॒ह ने॒दग्निं व्व॒रुणो गृह्णा॒दिति स य॒द्यमुत्र॒र्जीषस्य † द्विर॒वद्येद॒थाऽत्र सकृ॒द्यद्यु न

* का० श्रौ० सू० १०. ८. २७ ।
† का० श्रौ० सू० १०. ८. ३० ।

नाऽऽद्रियेताऽथोपरिष्टाद् द्विराज्यस्याऽभिघारयत्याश्राव्या-ऽऽहाऽग्नीवरुणौ यजेति वषट्कृते जुहोति ॥ १७ ॥ ता वा-ऽएताः । षडाहुतयो भवन्ति षड्वा ऽऋतवः संवत्सरस्य संवत्सरो वरुणस्तस्मात्षडाहुतयो भवन्ति ॥ १८ ॥ एत-दादित्यानामयनम् । आदित्यानीमानि यजूᳪंषीति वा ऽआहुः स यावदस्य वशः स्यादेवमेव चिकीर्षेद्यद्यु ऽएनमितरथा यजमानः कर्त्तवै ब्रूयादितरथो तर्हि कुर्य्यादेतानेव चतुरः प्प्रयाजानपबर्हिषो यजेद् द्वावाज्यभागौ वरुणमग्नीवरुणौ द्वावनुयाजावपबर्हिषो तद्दश दशाक्षरा वै विराड्विराड्वै यज्ञ-स्तद्विराजमेवैतद्यज्ञमभिसम्पादयति ॥ १९ ॥ एतदङ्गिर-सामयनम् । अतोऽन्न्यतरत्कृत्वा * यस्मिन्कुम्भ ऽऋजीषं भवति तं प्रप्लावयति 'समुद्रे[1] ते हृदयमप्प्स्वन्तरि'त्यापो वै समुद्रो रसो वा ऽआपस्तस्मिन्नेतद्रसन्दधाति तदेन-मेतेन रसेन सङ्गमयति तदेनमतो जनयति स ऽएनं जात-ऽएव सञ्जनयति 'सन्त्वा[2] विशन्त्वोषधीरुताऽऽप' ऽइति तदस्मि-न्नुभयद्रसन्दधाति यच्चौषधिषु यच्चाऽप्प्सु 'यज्ञस्य[3] त्वा यज्ञपते सूक्तोक्तौ नमोवाके विधेम यत्स्वाहे'ति तद्यदेव यज्ञस्य साधु तदेवाऽस्मिन्नेतद्दधाति ॥ २० ॥ † अथाऽनुस्पृ-ज्योपतिष्ठते । 'देवीराप[4] ऽएष वो गर्ब्भ' ऽइत्यपाᳪं ह्येष

* का० श्रौ० सू० १०. ९. ११.

(१) शु० सं० अ० ८ क० २५। (२) शु० सं० अ० ८ क० २५। (३) शु० सं० अ० ८ क० २५।

† का० श्रौ० सू० १०. ९. २।

(४) शु० सं० अ० ८ क० २६।

गर्ब्भ'स्तᳪ सुप्प्रीतᳪ[1] सुभृतं बिभ्रते'ति तदेनमद्भ्यᳪ परि-
ददाति गुप्त्यै 'देव[2] सोमैष ते लोक' ऽइत्यापो ह्येतस्य
लोक'स्तस्मिञ्छञ्च[3] वक्ष्व परि च वक्ष्वे'ति तस्मिन्नᳪ शञ्चैधि
सर्व्वाभ्यश्च न ऽआर्त्तिभ्यो गोपायेत्येवैतदाह ॥ २१ ॥
* अथोपमारयति । 'अवभृथ[4] निचुम्पुण निचेरुरसि
निचुम्पुणᳪ । अव देवैर्द्देवकृतमेनोऽयासिषमव मर्त्यैर्म्मर्-
त्यकृतमि'त्यव ह्येतद्देवैर्द्देवकृतमेनोऽयासीत्सोमेन राज्ञाऽव
मर्त्त्यैर्म्मर्त्यकृतमित्यव ह्येतन्मर्त्यैर्म्मर्त्यकृतमेनोऽयासीत्प-
शुना पुरोडाशेन 'पुरुराव्णो[5] देव रिषस्पाही'ति
सर्व्वाभ्यो माऽऽर्त्तिभ्यो गोपायेत्येवैतदाह ॥ २२ ॥ अथाऽ-
भ्यवेत्य स्नातᳪ । अन्न्योऽन्न्यस्य पृष्ठे प्रधावतस्तावन्न्ये
वाससी परिधायोदेतᳪ स यथाऽहिस्त्वचो निर्म्मुच्च्येतैवᳪ
सर्व्वस्मात्पाप्मनो निर्म्मुच्च्यते तस्मिन्न तावच्च नैनो भवति
यावत्कुमारेऽदति स येनैव निष्क्रामन्ति तेन पुनरायन्ति
पुनरेत्याऽऽहवनीये समिधमभ्यादधाति 'देवानाᳪ[6] समि-
दसी'ति यजमानमेवैतया समिन्धे देवानाᳪ हि समिद्धि-
मनु यजमानᳪ समिद्ध्यते ॥ २३ ॥ (E)

चतुर्थाध्याये पंचमं ब्राह्मणम् ॥ ५ ॥

इति चतुर्थोऽध्यायः ॥ ४ ॥

* का० श्रौ० सू० १०. ९. ३ ।

(१) शु० सं० अ० ८ क० २६ । (२) शु० सं० अ० ८ क० २६ । (३) शु० सं० अ० ८ क० २६ । (४) शु० सं० अ० ८ क० २७ । (५) शु० सं० अ० ८ क० २७ । (६) शु० सं० अ० ८ क० २७ ।

(E) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ५. ५. ३; तै० सं० ६, ६, ३; कठ० सं० २९. ३; कपि० सं० ४५. ४; मै० सं० ४. ८. ५ ।

[ उदयनीयेष्टिः ]

आदित्येन चरुणोदयनीयेन प्प्रचरति। तद्यदादित्यश्चरुर्ब्भवति यद्देवैनामदो देवा ऽअब्रुवँस्तवैव प्प्रायणीयस्तवोदयनीय ऽइति तमेवाऽस्या ऽएतदुभयत्र भागं करोति ॥ १ ॥ स यदमुत्र राजानं क्क्रेष्यन्नुपप्प्रैष्यन्न्यजते। तस्मात्तत्प्रायणीयं नामाऽथ यदत्राऽवभृथादुदेत्य यजते तस्मादेतदुदयनीयं नाम तद्वा ऽएतत्समानमेव हविरदित्या ऽएव प्प्रायणीयमदित्या ऽउदयनीयमियꣳ ह्येवाऽदितिः ॥ २ ॥ स वै पत्थ्यामेवाऽग्रे स्वस्तिं य्यजति। तद्देवा ऽअप्प्रज्ञायमाने व्वाचैव प्प्रत्यपद्यन्त व्वाचा हि मुग्धं प्रज्ञायतेऽथाऽत्र प्प्रज्ञाते यथापूर्व्वं करोति ॥ ३ ॥ सोऽग्निमेव प्प्रथमं य्यजति। अथ सोममथ सवितारमथ पत्थ्याꣳ स्वस्तिमथाऽदितिं व्वाग्वै पत्थ्या स्वस्तिरियमदितिरस्यामेव तद्देवा व्वाचं प्रत्यष्ठापयन्त्सेयं व्वागस्यां प्रतिष्ठिता व्वदति ॥ ४ ॥ अथ मैत्रावरुणीं व्वशामनूबन्ध्यामालभते। स ऽएषोऽन्न्य ऽएव यज्ञस्तायते पशुबन्ध ऽएव समिष्टयजूꣳषि ह्येवाऽन्तो यज्ञस्य ॥ ५ ॥ तद्यन्मैत्रावरुणी व्वशा भवति। यद्वा ऽईजानस्य स्विष्टं भवति मित्रोऽस्य तद् गृह्णाति यद्वस्य दुरिष्टं भवति व्वरुणोऽस्य तद् गृह्णाति ॥ ६ ॥ तदाहुः। क्केजानोऽभूदिति तद्यदेवाऽस्याऽत्र मित्रः स्विष्टं गृह्णाति तदेवाऽस्मा ऽएतया प्प्रीतः प्प्रत्यवसृजति यदु चाऽस्य व्वरुणो दुरिष्टं गृह्णाति तच्चैवाऽस्मा ऽएतया प्प्रीतः स्विष्टं करोति तदु चाऽस्मै प्प्रत्यवसृजति सोऽस्यैष

स्व ऽएव यज्ञो भवति स्वष्टः सुकृतम् ॥ ७ ॥ तद्यन्मैत्रावरुणी वशा भवति। यत्र वै देवाः रेतः सिक्तं प्राऽजनयँस्तदाग्निमारुतमित्युक्थं तस्मिँस्तद्व्याख्यायते यथा तद्देवा रेतः प्राऽजनयँस्ततोऽङ्गाराः समभवन्नङ्गारेभ्योऽङ्गिरसस्तदन्वन्न्ये पशवः ॥ ८ ॥ अथ यद्भासाः पाꣳसवः पर्य्यशिष्यन्त। ततो गर्द्दभः समभवत्तस्माद्यत्र पाꣳसुलं भवति गर्द्दभस्थानमिव बतेत्त्याहुरथ यदा न कश्चन रसः पर्य्यशिष्यत तत ऽएषा मैत्रावरुणी वशा समभवत्तस्मादेषा न प्रजायते रसाद्धि रेतः सम्भवति रेतसः पशवस्तद्यदन्ततः समभवत्तस्मादन्तं ष्यज्ञस्याऽनुवर्त्तते तस्माद्वाऽएषाऽत्र मैत्रावरुणी वशाऽवक्लृप्ततमा भवति यदि वशां न विन्देदुप्युक्षवश ऽएव स्यात् ॥ ९ ॥ अथैतरं विश्वे देवा* ऽअमरीमृश्यन्त। ततो वैश्वदेवी समभवदथ बार्हस्पत्त्या सोऽन्तोऽन्तो हि बृहस्पतिः ॥ १० ॥ स यः सहस्रं वा भूयो वा दद्यात्। स ऽएनाः सर्व्वा ऽआलभेत। सर्व्वं वै तस्याऽऽप्तं भवति सर्व्वं जितं ष्यः सहस्रं वा भूयो वा ददाति सर्व्वमेता ऽएवमेव यथापूर्व्वं मैत्रावरुणीमेवाऽग्रेऽथ वैश्वदेवीमथ बार्हस्पत्त्यम् ॥ ११ ॥ अथो ये दीर्ग्घसत्रमासीरन्। संवत्सरं वा भूयो वा त ऽएनाः सर्व्वा ऽआलभेरन्त्सर्व्वं वै तेषामाप्तं भवति सर्व्वं जितं ष्ये दीर्ग्घसत्रमासते संवत्सरं वा भूयो वा सर्व्वमेता ऽएवमेव यथापूर्व्वम् ॥ १२ ॥ अथोदवसानीययेष्ट्या यजते। स ऽआग्नेयं

* 'अमरीमृत्स्यन्त' इति पाठः 'ग' पुस्तके।

पञ्चकपालं पुरोडाशं निर्वपति तस्य पञ्चपदाः पङ्क्तयो याज्याऽनुवाक्या भवन्ति यातयामेव वा ऽएतदीजानस्य यज्ञो भवति सोऽस्मात्पराङिव भवत्यग्निर्वै सर्वे यज्ञाऽअग्नौ हि सर्वान्यज्ञाँस्तन्वते ये च पाकयज्ञा ये चेतरे तद्यज्ञमेवैतत्पुनरारभते तथाऽस्याऽयातयामा यज्ञो भवति तथो ऽअस्मान्न पराङ् भवति ॥ १३ ॥ तद्यत्पञ्चकपालः पुरोडाशो भवति । पञ्चपदाः पङ्क्तयो याज्याऽनुवाक्याः पाङ्क्तो वै यज्ञस्तद्यज्ञमेवैतत्पुनरारभते तथाऽस्याऽयातयामा यज्ञो भवति तथो ऽअस्मान्न पराङ् भवति ॥ १४ ॥ तस्य हिरण्यं दक्षिणा । आग्नेयो वा ऽएष यज्ञो भवत्यग्नेरेतो हिरण्यं तस्माद्धिरण्यं दक्षिणाऽनड्वान्वा स हि वहेनाऽऽग्नेयोऽग्निदग्धमिव ह्यस्य वहं भवति ॥ १५ ॥ अथो चतुर्गृहीतमेवाऽऽज्यं गृहीत्वा । वैष्णव्यर्चा जुहो'त्युरु[1] विष्णो विक्रमस्वोरु क्षयाय नस्कृधि । घृतं घृतयोने पिब प्प्र-प्प्र यज्ञपतिं तिर स्वाहे'ति यज्ञो वै विष्णुस्तद्यज्ञमेवैतत्पुनरारभते तथाऽस्याऽयातयामा यज्ञो भवति तथो ऽअस्मान्न पराङ् भवति तन्नो यच्छक्नुयात्तद्दद्यान्नाऽदक्षिणः हविः स्यादिति ह्याहुरथ यदेवैषोदवसानीयेष्टिः सन्तिष्ठतेऽथ सायमाहुतिं जुहोति काल ऽएव प्प्रातराहुतिम् ॥ १६ ॥ (A)

पञ्चमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



(१) शु० सं० अ० ५ क० ३८।

(A) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ५. ५. ४।

[ आनुबन्ध्ययागः ]

वशामालभन्ते । तामालभ्य संज्ञपयन्ति संज्ञप्याऽऽह वपामुत्खिदेत्युत्खिद्य वपामनुमर्शं गर्भमेष्टवै ब्रूयात्स यदि न विन्दन्ति किमाद्रियेरन्न्यद्यु विन्दन्ति तत्र प्रायश्चित्तिः क्रियते ॥ १ ॥ न वै तदवकल्पते । यदेकां मन्यमाना ऽएकयेवैतया चरेयुर्यद्द्वे मन्यमाना द्वाभ्यामिव चरेयु स्स्थालीञ्चैवोष्णीषं चोपकल्पयितवै ब्रूयात् ॥ २ ॥ अथ वपया चरन्ति । यथैव तस्यै चरणं वपया चरित्वाऽध्वर्युश्च यजमानश्च पुनरेतः स ऽआहाऽध्वर्युर्न्निरूहैतं गर्भमिति तद्ध ह नोदरतो निरूहेदार्त्तीया वै मृतायाऽउदरतो निरूहन्ति यदा वै गर्भः समृद्धो भवति प्रजननेन वै स तर्हि प्रत्यङ्ङैति तमपि विरुज्य श्रोणी प्रत्यञ्चं निरूहितवै ब्रूयात् ॥ ३ ॥ तं * निरुह्यमाणमभिमन्त्रयते । '[1]एजतु दशमास्यो गर्भो जरायुणा सहे'ति स यदाहैजत्विति प्राणमेवाऽस्मिन्नेतद्दधाति दशमास्य ऽइति यदा वै गर्भः समृद्धो भवत्यथ दशमास्यस्तमेतदप्यदशमास्यꣳ सन्तं ब्रह्मणैव यजुषा दशमास्यं करोति ॥ ४ ॥ जरायुणा सहेति । तद्यथा दशमास्यो जरायुणा सहेयादेवमेतदाह '[2]यथाऽयं वायुरेजति यथा समुद्र ऽएजती'ति प्राणमेवाऽस्मिन्नेतद्दधा'[3]त्यैवाऽयं दशमास्यो ऽअस्रज्जरायुणा सहे'ति तद्यथा दश-

* का० श्रौ० सू० २५. १०. ५ ।

( १ ) शु० सं० अ० ८ क० २८ । ( २ ) शु० सं० अ० ८ क० २८ । ( ३ ) शु० सं० अ० ८ क० २८ ।

मास्यो जरायुणा सह स्नꣳसेतैवमेतदाह ॥ ५ ॥ तदाहुः । कथमेतं गर्भं कुर्य्यादित्यङ्गादङ्गाद्धैवाऽस्याऽवद्येयुर्य्यथैवेतरेषामवदानानामवदानं तदु तथा न कुर्य्यादुत ह्येषोऽविकृताङ्गो भवत्यधस्तादेव ग्रीवाऽअपिकृत्यैतस्याꣳ स्थाल्यामेतं मेधꣳ श्चोतयेयुः सर्वेभ्यो वा ऽअस्यैषोऽङ्गेभ्यो मेध श्चोतति तदस्य सर्वेषामेवाऽङ्गानामवत्तं भवत्यवद्यन्ति वशाया ऽअवदानानि यथैव तेषामवदानम् ॥ ६ ॥ तानि पशुश्रपणे श्रपयन्ति । तदुवैतं मेधꣳ श्रपयन्त्युष्णीषेणाऽऽवेष्ट्य * गर्भं पार्श्वतः पशुश्रपणस्योप निदधाति यदा शृतो भवत्यथ समुद्याऽवदानान्यैवाऽभिजुहोति नैतं मेधमुद्वासयन्ति पशुं तदुवैतं मेधमुद्वासयन्ति ॥ ७ ॥ तं जघनेन चात्वालमन्तरेण यूपं चाऽग्निञ्च हरन्ति । दक्षिणतो निधाय प्प्रतिप्प्रस्थाताऽवद्यत्यथ स्रुचोरुपस्तृणीतेऽथ मनोतायै हविषोऽनुवाचऽआहाऽवद्यन्ति वशाया ऽअवदानानां यथैव तेषामवदानम् ॥८॥ अथ प्प्रचरणीति स्रुग्भवति । † तस्यां प्रतिप्प्रस्थाता मेधायोपस्तृणीते द्विरवद्यति सकृदभिघारयति प्प्रत्यनक्त्यवदाने ऽअथाऽनुवाच ऽआहाऽऽश्रावयाऽऽह प्प्रेष्येति वषट्कृतेऽद्ध्वर्य्युर्ज्जुहोत्यद्ध्वर्य्योरनुहोमं ‡ जुहोति प्प्रतिप्प्रस्थाता ॥ ९ ॥ '[1]यस्यै ते यज्ञियो गर्भ' ऽइति । अयज्ञिया वै गर्भास्तमेतद् ब्रह्मणैव यजुषा यज्ञियं करोति '[2]यस्यै योनि-

---

* का० श्रौ० सू० २५. १०. ८,९ ।
† का० श्रौ० सू० २५. १०. १० ।
‡ का० श्रौ० सू० २५. १०. ११,१२ ।
(१) शु० सं० अ० ८ क० २९ । (२) शु० सं० अ० ८ क० २९ ।

हिरण्ययी'त्यदो वा ऽएतस्यै योनिं विच्छिन्दन्ति यददो
निष्कर्षन्त्यमृतमायुर्हिरण्यं तामेवाऽस्या ऽएतदमृतां ऽयोनिं
करो'[1]त्यङ्गान्न्यहुता यस्य तं मात्रा समजीगमथं स्वाहे'ति
यदि पुमान्त्स्याद्यद्यु स्त्री स्यादङ्गान्न्यहुता यस्यै तां मात्रा
समजीगमथं स्वाहेति यद्यु ऽअविज्ञातो गर्ब्भो भवति
पुथंस्कृत्यैव जुहुयात्पुमाथंसो हि गर्ब्भो ऽअङ्गान्न्यहुता
यस्य तं मात्रा समजीगमथं स्वाहेत्यदो वा ऽएतं मात्रा
विष्वञ्चं कुर्व्वन्ति यददो निष्कर्षन्ति तमेतद् ब्रह्मणैव यजुषा
समर्द्ध्य मध्यतो यज्ञस्य पुनर्म्मात्रा सङ्गमयति ॥ १० ॥
अथाऽद्धरुर्युर्व्वनस्पतिना * चरति । वनस्पतिनाऽद्धरुर्युश्च-
रित्वा यान्न्युपभृत्यवदानानि भवन्ति तानि समानयमान-
ऽआहाऽग्नये स्विष्टकृतेऽनुब्रूहीत्यत्याक्रामति प्रतिप्रस्थाता
स ऽएतथ्ठ सर्व्वमेव मेधं गृह्णीतेऽथोपरिष्टाद् द्विराज्यस्या-
ऽभिघारयत्याश्राव्याऽऽह प्रेष्येति वषट्कृतेऽद्धरुर्युर्जुहो-
त्यद्धरुर्योरनुहोमं जुहोति प्रतिप्रस्थाता ॥११॥ '[2]पुरुदस्मो
विषुरूप ऽइन्दुरि'ति । बहुदान ऽइति हैतद्यदाह पुरुदस्म-
ऽइति विषुरूप ऽइति विषुरूपा ऽइव हि गर्ब्भा 'ऽइन्दु-
[3]रन्तर्म्महिमानमानञ्ज धीर' ऽइत्यन्तर्ह्येष मातर्य्यक्तो भव-
'[4]त्येकपदीं द्विपदीं त्रिपदीं चतुष्पदीमष्टापदीं भुवनाऽनु-

---

(१) शु० सं० अ० ८ क० २९।
* का० श्रौ० सू० २५. १०. १४,१५।
(२) शु० सं० अ० ८ क० ३०। (३) शु० सं० अ० ८ क० ३०। (४) शु० सं० अ० ८ क० ३०।

प्प्रथन्ताᳫ स्वाहे॑ति प्प्रथयत्त्येवैनामेतत्त्सुभूयो ह जयत्त्य-ष्ट्वापव्येष्ट्वा यदु चाऽनष्ट्वाऽपव्या ॥ १२ ॥ तदाहुः । क्वैतं गर्ब्भं कुर्य्यादिति वृक्ष ऽएवैनमुद्दध्युरन्तरिक्षायतना वै गर्ब्भाऽअन्तरिक्षमिवैतद्यद्वृक्षस्तदेनᳫ स्व ऽएवाऽऽयतने प्प्रतिष्ट्ठापयति तदु वा ऽआहुर्य्य ऽएनं तत्राऽनुव्व्याहरेद्वृक्ष ऽएनं मृतमुद्धाऽस्यन्तीति तथा हैव स्यात् ॥ १३ ॥ अप ऽएवैनमब्भ्यवहरेयुः । आपो वा ऽअस्य सर्व्वस्य प्प्रतिष्ट्ठा तदेनमप्प्स्वेव प्प्रतिष्ट्ठापयति तदु वा ऽआहुर्य्य ऽएनं तत्राऽनुव्व्याहरेदप्प्स्वेव मरिष्यतीति तथा हैव स्यात् ॥ १४ ॥ आखूत्त्कर * ऽएवैनमुपकिरेयुः । इयं व्वा ऽअस्य सर्व्वस्य प्प्रतिष्ट्ठा तदेनमस्यामेव प्प्रतिष्ट्ठापयति तदु वा ऽआहुर्य्य ऽएनं तत्राऽनुव्व्याहरेत्क्षिप्प्रेऽस्मै मृताय श्मशानं करिष्यन्तीति तथा हैव स्यात् ॥१५॥ पशुश्रपण ऽएवैनं मरुद्भ्यो जुहुयात्। अहुतादो वै देवानां मरुतो विडहुतमिवैतद्यदश्रृतो गर्ब्भ ऽआहवनीयाद्वा ऽएष ऽआहृतो भवति पशुश्रपणस्तथाऽऽह न बहिर्द्धा यज्ञाद्भवति न प्प्रत्यक्षमिवाऽऽहवनीये देवानां व्वै मरुतस्तदेनं मरुत्स्वेव प्प्रतिष्ट्ठापयति ॥ १६ ॥ स हुत्त्वैव समिष्ट्टयजूᳫषि । प्रथमाऽवशान्तेष्वङ्गारेष्वेतः सोष्णीषं गर्ब्भमादत्ते तं प्राङ्तिष्ट्ठञ्जुहोति † मारुत्यर्च्चा 'मरुतो यस्य हि क्षये पाथा दिवो विमहसः । स सुगोपातमो जन' ऽइति न स्वाहाकरोत्यहुतादो व्वै देवानां मरुतो विडहुत-

* का० श्रौ० सू० २५. १०. १६–१७।

† का० श्रौ० सू० २५. १०. १८।

(१) शु० सं० अ० ८ क० ३१।

मिवैतद्यदस्वाहाकृतं देवानां वै मरुतस्तदेनं मरुत्स्वेव प्प्रतिष्ठापयति ॥ १७ ॥ * अथाऽङ्गारैरभि समूहति। 'मही द्यौ[1]ः पृथिवी च न ऽइमं ग्यज्ञं मिमिक्षताम्। पिपृतान्नो भरीमभिरि'ति ॥ १८ ॥ (B)

पञ्चमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥



[ षोडशिग्रहः ]

इन्द्रो ह वै षोडशी। तं नु सकृदिन्द्रं भूतान्न्यत्त्यरिच्यन्त प्प्रजा वै भूतानि ता हैनेन सदृग्भवामिवाऽऽसुः ॥ १ ॥ इन्द्रो ह वा ऽईक्षाञ्चक्रे। कथं न्न्वहमिदꣳ सर्वमतितिष्ठेयमर्वागेव मदिदꣳ सर्वꣳ स्यादिति स ऽएतं ग्रहमपश्यत्तमगृह्णीत स ऽइदꣳ सर्वमेवाऽत्त्यतिष्ठदर्वागेवाऽस्मादिदꣳ सर्वमभवत्सर्वꣳ ह वा ऽइदमतितिष्ठत्त्यर्वागेवाऽस्मादिदꣳ सर्वं भवति यस्यैवं विदुष ऽएतं ग्रहं गृह्णन्ति ॥ २ ॥ तस्मादेतदृषिणाऽभ्यनूक्तम्। 'न ते म[2]हित्त्वमनुभूदध द्यौ र्यदन्न्यया स्फिग्या क्षामवस्थ'ऽइति न ह वाऽअस्याऽसौ द्यौरन्न्यतरां चन स्फिगीमनुबभूव तथेदꣳ सर्वमेवाऽत्त्यतिष्ठदर्वागेवाऽस्मादिदꣳ सर्वमभवत्सर्वꣳ ह वा ऽइदमतितिष्ठत्त्यर्वागेवाऽस्मादिदꣳ सर्वं भवति

* का० श्रौ० सू० २५. १०. १९।

(१) शु० सं० अ० ८ क० ३२।

(B) अत्रशतम् २७००; एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ५. ६. ४।

(२) ऋ० सं० ३, ३२, ११।

यस्यैवं विदुष ऽएतं ग्रहं गृह्णन्ति ॥ ३ ॥ तं वै हरिवत्यर्चा गृह्णाति । हरिवतीषु स्तुवते हरिवतीरनुशꣳसति वीर्यं वै हर ऽइन्द्रोऽसुराणाꣳ सपत्नानाꣳ समवृङ्क्त तथो ऽएवैष-ऽएतद्वीर्यꣳ हरꣳ सपत्नानाꣳ संवृङ्क्ते तस्माद्धरिवत्यर्चा गृह्णाति हरिवतीषु स्तुवते हरिवतीरनु शꣳसति ॥ ४॥ तं वा-ऽअनुष्टुभा गृह्णाति । गायत्रं वै प्रातꣳ सवनं त्रैष्टुभं माध्यन्दिनꣳ सवनं जागतं तृतीयसवनमथाऽतिरिक्ताऽनुष्टुबत्ये-वैनमेतद्रेचयति तस्मादनुष्टुभा गृह्णाति ॥ ५ ॥ तं वै चतुःस्रक्तिना * पात्रेण गृह्णाति । त्रयो वा ऽइमे लोका-स्तदिमानेव लोकाँस्तिसृभिः स्रक्तिभिराप्नोत्यथैवैनं चतु-र्थ्या स्रक्त्या रेचयति तस्माच्चतुःस्रक्तिना पात्रेण गृह्णाति ॥६॥ [ अर्धप्रपाठकः ॥६३॥ ] तं वै प्रातꣳ सवने गृह्णीयात् । आग्रयणं गृहीत्वा स प्रातꣳ सवने गृहीत ऽएतस्मात्कालादुपशेते तदेनꣳ सर्वाणि सवनान्यतिरेचयति ॥७॥ माध्यन्दिने वैनꣳ सवने गृह्णीयात् । आग्रयणं गृहीत्वा सो ऽएषा मीमाꣳसैव प्रातꣳ सवन ऽएवैनं गृह्णीयादाग्रयणं गृहीत्वा स प्रातꣳ सवने ग्रहीत ऽएतस्मात्कालादुपशेते ॥ ८ ॥ † अथाऽतो गृह्णात्येव । '[1]आतिष्ठ वृत्रहन्रथं युक्ता ते ब्रह्मणा हरी । अर्वाचीनꣳ सुते मनो ग्रावा कृणोतु वग्नुना । उपयामगृहीतोऽसीन्द्राय त्वा षोडशिन ऽएष ते योनिरि-न्द्राय त्वा षोडशिन' ऽइति ॥ ९ ॥ अनया वा । '[2]युक्ष्वा

* का० श्रौ० सू० १२. ५. ७ ।

† का० श्रौ० सू० १२. ५. २ ।

( १ ) शु० सं० अ० ८ क० ३३ । ( २ ) शु० सं० अ० ८ क० ३४ ।

हि केशिना हरी वृषणा कक्ष्यप्रा । अथा न ऽइन्द्र सोमपा गिरामुपश्श्रुतिं चर । उपयामगृहीतोऽसीन्द्राय त्वा षोडशिन-ऽएष ते योनिरिन्द्राय त्वा षोडशिन' ऽइति ॥ १० ॥ अथेत्य स्तोत्रमुपाकरोति । सोमोऽत्त्यरेच्च्युपाऽऽवर्त्तद्ध्व-मित्यत्त्येवैनमेतद्रेचयति तं वै पुराऽस्तमयादुपाकरोत्यस्तमि-तेऽनुशꣳसति तदेनेनाऽहोरात्रे सन्दधाति तस्मात्पुराऽस्त-मयादुपाकरोत्यस्तमितेऽनुशꣳसति ॥ ११ ॥ (C)

पञ्चमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥



[ अतिग्राह्या ग्रहाः ]

सर्वे ह वै देवाः । अग्रे सदृशा ऽआसुः सर्वे पुण्या-स्तेषाꣳ सर्वेषाꣳ सदृशानाꣳ सर्वेषां पुण्यानां त्रयोऽकाम-यन्ताऽतिष्ठावानः स्यामेत्यग्निरिन्द्रः सूर्यः ॥ १ ॥ तेऽर्च्चन्तः श्राम्यन्तश्चेरुः । त ऽएतानतिग्राह्यान्ददृशुस्तानत्यगृह्णत तद्यदेनानत्यगृह्णत तस्मादतिग्राह्या नाम तेऽतिष्ठावानो-ऽभवन्यथैत ऽएतदतिष्ठेवाऽतिष्ठेव ह वै भवति यस्यैवं विदुष ऽएतान्ग्रहान्गृह्णन्ति ॥ २ ॥ नो ह वा ऽइदमग्रेऽग्नौ वर्च्च ऽआस । यदिदमस्मिन्वर्च्चः सोऽकामयतेदं मयि वर्च्चः स्यादिति स ऽएतं ग्रहमपश्यत्तमगृह्णीत ततोऽस्मि-न्नेतद्वर्च्च ऽआस ॥ ३ ॥ नो ह वा ऽइदमग्र ऽइन्द्र ऽओज-ऽआस । यदिदमस्मिन्नोजः सोऽकामयतेदं मय्योजः स्यादिति स ऽएतं ग्रहमपश्यत्तमगृह्णीत ततोऽस्मिन्नेतदोज-

(C) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ५. ६. १; तै० सं० ६. ६. ११; मै० सं० ४. ७. ६ ।

ऽआस ॥ ४ ॥ नो ह वा ऽइदमग्रे सूर्य्ये बभ्राज ऽआस । यदिदमस्मिन्बभ्राजᳬ सोऽकामयतेदं मयि बभ्राजᳬ स्यादिति स ऽएतं ग्रहमपश्यत्तमगृह्णीत ततोऽस्मिन्नेतद्बभ्राजऽआसैतानि ह वै तेजाᳬस्येतानि वीर्य्याण्यात्मन्धत्ते यस्यैवं विदुष ऽएतान्ग्रहान्गृह्णन्ति ॥ ५ ॥ तान्वै प्रातᳬसवने गृह्णीयात् । आग्रयणं गृहीत्वाऽऽत्मा वा ऽआग्रयणो बहु वा ऽइदमात्मन ऽएकैकमतिरिक्तं क्लोम हृदयं त्वद्यत्वत् ॥ ६ ॥ माध्यन्दिने वैनान्त्सवने गृह्णीयात् । उक्थ्यं गृहीत्वोपाकरिष्यन्त्वा पूतभृतोऽयᳬ ह वा ऽअस्यैषोऽनिरुक्तऽआत्मा यदुक्थ्यᳬ सो ऽएषा मीमाᳬसैव प्रातᳬ सवनऽएवैनान्गृह्णीयादाग्रयणं गृहीत्वा ॥ ७ ॥ ते माहेन्द्रस्यैवाऽनुहोमᳬ हूयन्ते । एष वा ऽइन्द्रस्य निष्केवल्यो ग्रहो यन्माहेन्द्रोऽप्यस्यैतन्निष्केवल्यमेव स्तोत्रं निष्केवल्यᳬ शस्त्रमिन्द्रो वै यजमानो यजमानस्य वा ऽएते कामाय गृह्यन्ते तस्मान्माहेन्द्रस्यैवाऽनुहोमᳬ हूयन्ते ॥ ८ ॥ अथाऽतो * गृह्णात्येव । '[1]अग्ने पवस्व स्वपा ऽअस्मे वर्चᳬ सुवीर्य्यम् । दधद्रयिं मयि पोषम् । उपयाम गृहीतोऽस्यग्नये त्वा वर्चस ऽएष ते योनिरग्नये त्वा वर्चसे' ॥ ९ ॥ '[2]उत्तिष्ठन्नोजसा । सह पीत्वी शिप्रे ऽअवेपयᳬ । सोममिन्द्र चमू सुतम् । उपयामगृहीतोऽसीन्द्राय त्वौजस ऽएष ते योनिरिन्द्राय त्वौजसे' ॥ १० ॥ '[3]अदृश्रमस्य केतवᳬ ।

* का० श्रौ० सू० १२. ३. २ ।

(१) शु० सं० अ० ८ क० ३८ । (२) शु० सं० अ० ८ क० ३९ । (३) शु० सं० अ० ८ क० ४० ।

व्वि रश्मयो जनाँ२ऽअनु । भ्राजन्तोऽअग्नयो यथा । उपयाम गृहीतोऽसि सूर्य्याय त्वा भ्भ्राजायैष ते योनिः सूर्य्याय त्वा भ्भ्राजाये'ति ॥ ११ ॥ तेषां † भक्षः । '(१)अग्ने वर्च्चस्विन्वर्च्चस्वाँस्त्वं देवेष्वसि वर्च्चस्वानहं मनुष्येषु भूयासमिन्द्रौजिष्ठौजिष्ठस्त्वं देवेष्वस्योजिष्ठोऽहं मनुष्येषु भूयासꣳ सूर्य्य भ्भ्राजिष्ठ भ्भ्राजिष्ठस्त्वं देवेष्वसि भ्भ्राजिष्ठोऽहं मनुष्येषु भूयासमि'त्येतानि ह वै भ्भ्राजाꣳस्येतानि व्वीर्य्याण्यात्मन्धत्ते यस्यैवं विदुष ऽएतान्ग्रहान्गृह्णन्ति ॥ १२ ॥ तान्वै पृष्ठ्ये षडहे गृह्णीयात् । पूर्वे त्र्यहऽआग्नेयमेव प्प्रथमेऽहन्नैन्द्रं द्वितीये सौर्य्यं तृतीय ऽएवमेवाऽन्वहम् ॥ १३ ॥ तानु हैक ऽउत्तरे त्र्यहे गृह्णन्ति । तदु तथा न कुर्य्यात्पूर्व ऽएवैनाँस्त्र्यहे गृह्णीयाद्यद्युत्तरे त्र्यहे ग्रहीष्यन्त्स्यात्पूर्व ऽएवैनाँस्त्र्यहे गृहीत्वाऽथोत्तरे ‡ त्र्यहे गृह्णीयादेवमेव यथापूर्वं व्विश्वजिति सर्वपृष्ठ ऽएकाह ऽएव गृह्णन्ते ॥ १४ ॥ (D)

पञ्चमाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥



एष वै प्प्रजापतिः । य ऽएष यज्ञस्तायते यस्मादिमाः प्प्रजाः प्प्रजाता ऽएतं व्वेवाऽप्प्येतर्ह्यनु प्प्रजायन्ते ॥ १ ॥

† का० श्रौ० सू० १२. ३. ६ ।

(१) शु० सं० अ० ८ क० ३८–४० ।

‡ का० श्रौ० सू० १२. ३. ३–४ ।

(D) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ५. ६. २; कपि० सं० ४६. २. ३; तै० सं० ६. ८; मै० सं० ४. ७. ३ ।

उपाᳪशुपात्रमेवाऽन्वजाः प्रजायन्ते । तद्वै तत्पुनरूर्ध्वं यज्ञे प्रयुज्यते तस्मादिमाः प्रजाः पुनरभ्यावर्त्तं प्रजायन्ते ॥ २ ॥ अन्तर्यामपात्रमेवाऽन्ववयः प्रजायन्ते । तद्वै तत्पुनरूर्ध्वं यज्ञे प्रयुज्यते तस्मादिमाः प्रजाः पुनरभ्यावर्त्तं प्रजायन्ते ॥ ३ ॥ अथ यदेतयोरुभयोः । सह सतोरुपाᳪशुं पूर्वं जुहोति तस्मादु सह सतोऽजाऽऽविकस्योभयस्यैवाऽजाः पूर्वा यन्त्यनूच्योऽवयः ॥ ४ ॥ अथ यदुपाᳪशुᳪ हुत्वा । ऊर्ध्वमुन्मार्ष्टि तस्मादिमा ऽअजा ऽअरोहीतरा ऽआक्रममाणा ऽइव यन्ति ॥५॥ अथ यदन्तर्यामᳪ हुत्वा । अवाञ्चमवमार्ष्टि तस्मादिमा ऽअवयोऽवाचीनशीर्ष्ण्यः खनन्त्य ऽइव यन्त्येता वै प्रजापतेः प्रत्यक्षतमां यदजाऽवयस्तस्मादेतास्त्रिः संवत्सरस्य विजायमाना द्वौ त्रीनिति जनयन्ति ॥ ६ ॥ शुक्रपात्रमेवाऽनु मनुष्याः प्रजायन्ते । तद्वै तत्पुनरूर्ध्वं यज्ञे प्रयुज्यते तस्मादिमाः प्रजाः पुनरभ्यावर्त्तं प्रजायन्त ऽएष वै शुक्रो य ऽएष तपत्येष ऽउ ऽएवेन्द्रः पुरुषो वै पशूनामैन्द्रस्तस्मात्पशूनामीष्टे ॥ ७ ॥ ऋतुपात्रमेवाऽन्वेकशफं प्रजायते । तद्वै तत्पुनरूर्ध्वं यज्ञे प्रयुज्यते तस्मादिमाः प्रजाः पुनरभ्यावर्त्तं प्रजायन्त ऽइतीव वा ऽऋतुपात्रमितीवैकशफस्य शिर ऽआग्रयणपात्रमुक्थ्यपात्रमादित्यपात्रमेतान्येवाऽनु गावः प्रजायन्ते तानि वै तानि पुनरूर्ध्वं यज्ञे प्रयुज्यन्ते तस्मादिमाः प्रजाः पुनरभ्यावर्त्तं प्रजायन्ते ॥८॥ अथ यदजाः । कनिष्ठानि पात्राण्यनु प्रजायन्ते तस्मादेतास्त्रिः संवत्सरस्य विजायमाना

द्वौ त्रीनिति जनयन्त्यः कनिष्ठानि हि पात्राण्यनु प्रजायन्ते ॥ ९ ॥ अथ यद्ग्रावः । भूयिष्ठानि पात्राण्यनु प्रजायन्ते तस्मादेताः सकृत्संवत्सरस्य विजायमाना ऽएकैकं जनयन्त्यो भूयिष्ठा भूयिष्ठानि हि पात्राण्यनु प्रजायन्ते ॥ १० ॥ अथ द्रोणकलशे । अन्ततो हारियोजनं ग्रहं गृह्णाति प्रजापतिर्वै द्रोणकलशः स ऽइमाः प्रजा ऽउपाऽऽवर्त्तते ता ऽअवति ता ऽअभिजिघ्रत्येतद्वा ऽएना भवति यदेनाः प्रजनयति ॥ ११ ॥ पञ्च ह त्वेव तानि पात्राणि । यानीमाः प्रजा ऽअनु प्रजायन्ते समानमुपाꣳश्वन्तर्या-मयोः शुक्रपात्रमृतुपात्रमाग्रयणपात्रमुक्थ्यपात्रं पञ्च वा-ऽऋतवः संवत्सरस्य संवत्सरः प्रजापतिः प्रजापतिर्यज्ञो यद्यु षडेवर्त्तवः संवत्सरस्येत्यादित्यपात्रमेवैतेषाꣳ षष्ठम् ॥ १२ ॥ एकꣳ ह त्वेव तत्पात्रम् । यदिमाः प्रजा ऽअनु प्रजायन्त ऽउपाꣳशुपात्रमेव प्राणो ह्युपाꣳशुः प्राणो हि प्रजापतिः प्रजापतिꣳ ह्येवेदꣳ सर्वमनु ॥ १३ ॥ (E)

पञ्चमाध्याये पञ्चमं ब्राह्मणम् ॥ ५ ॥

[ ग्रहावेक्षणम् ]

एष वै प्रजापतिः । य ऽएष यज्ञस्तायते यस्मा-दिमाः प्रजाः प्रजाता ऽएतम्वेवाऽप्येतर्ह्यनु प्रजायन्ते स ऽआश्विनं ग्रहं गृहीत्वाऽवकाशानवकाशयति ॥ १ ॥ स-

(E) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ५. ६. ६; तै० सं० ६. ५. १०।

ऽउपाᳬंशुमेव * प्प्रथममवकाशयति । 'प्राणाय[1] मे वर्च्चोदा वर्च्चसे पवस्वे'त्यथोपाᳬंशुसवनं 'व्यानाय[2] मे वर्च्चोदा वर्च्चसे पवस्वे'त्यथाऽन्तर्य्यामम्'मुदानाय[3] मे वर्च्चोदा वर्च्चसे पवस्वे'त्यथैन्द्रवायवं 'वाचे[4] मे वर्च्चोदा वर्च्चसे पवस्वे'त्यथ मैत्रावरुणं 'क्रतूदक्षाब्भ्यां[5] मे वर्च्चोदा वर्च्चसे पवस्वे'त्यथाऽऽश्विनᳬं 'श्रोत्राय[6] मे वर्च्चोदा वर्च्चसे पवस्वे'त्यथ शुक्रामन्थिनौ 'चक्षुर्ब्भ्यां[7] मे वर्च्चोदसौ वर्च्चसे पवेथा'मिति ॥ २ ॥ अथाऽऽग्रयणम् । 'आत्मने[8] मे वर्च्चोदा वर्च्चसे पवस्वे'त्यथोक्थ्य'मोजसे[9] मे वर्च्चोदा वर्च्चसे पवस्वे'त्यथ ध्रुव'मायुषे[10] मे वर्च्चोदा वर्च्चसे पवस्वे'त्यथाऽम्भृणौ 'विश्वाब्भ्यो[11] मे प्प्रजाब्भ्यो वर्च्चोदसौ वर्च्चसे पवेथामि'ति वैश्वदेवौ वा ऽअम्भृणावतो हि देवेब्भ्य ऽउन्नयन्त्यतो मनुष्येब्भ्योऽतः पितृब्भ्यस्तस्माद्वैश्वदेवावम्भृणौ ॥ ३ ॥ अथ † द्रोणकलशम् । 'कोऽसि[12] कतमोऽसी'ति प्प्रजापतिर्वै कः 'कस्याऽसि[13] को नामाऽसी'ति प्प्रजापतिर्वै को नाम 'यस्य[14] ते नामाऽमन्मही'ति मनुते ह्यस्य नाम 'यन्त्वा[15] सोमेनाऽतीतृपामे'ति तर्प्पयति ह्येनᳬं सोमेन स ऽआश्विनं ग्रहं गृहीत्वा-

* तै० सं० ३, २, ३; का० श्रौ० सू० ९. ७. ८ ।

( १ ) शु० सं० अ० ७ क० २७ । ( २ ) शु० सं० अ० ७ क० २७ । ( ३ ) शु० सं० अ० ७ क० २७ । ( ४ ) शु० सं० अ० ७ क० २७ । ( ५ ) शु० सं० अ० ७ क० २७ । ( ६ ) शु० सं० अ० ७ क० २७ । ( ७ ) शु० सं० अ० ७ क० २७ । ( ८ ) शु० सं० अ० ७ क० २८ । ( ९ ) शु० सं० अ० ७ क० २८ । ( १० ) शु० सं० अ० ७ क० २८ । ( ११ ) शु० सं० अ० ७ क० २८ ।

† "कोऽसीति द्रोणकलशम्" (का० श्रौ० सू० ९. ७. १४) ।

( १२ ) शु० सं० अ० ७ क० २९ । (१३) शु० सं० अ० ७ क० २९ । (१४) शु० सं० अ० ७ क० २९ । ( १५ ) शु० सं० अ० ७ क० २९ ।

ऽन्न्वङ्गमाशिषमाशास्ते 'सुप्रजाः प्प्रजाभिः स्यामि'ति तत्प्रजामाशास्ते 'सुवीरो व्वीरैरि'ति तद्वीरानाशास्ते 'सुपोषः पोषैरि'ति तत्पुष्टिमाशास्ते ॥ ४ ॥ तान्वै न सर्व्वमिवाऽवकाशयेत् । यो न्न्वेव ज्ञातस्तमवकाशयेद्यो वाऽस्य प्प्रियः स्याद्यो वाऽनूचानोऽनूक्तेनैनाङ्प्राप्नुयात्स ऽआश्विनं ग्रहं गृहीत्वा कृत्स्नं ऽयज्ञं जनयति तं कृत्स्नं ऽयज्ञं जनयित्वा तमात्मन्धत्ते तमात्मन्कुरुते ॥ ५ ॥ (F)

पञ्चमाध्याये षष्ठं ब्राह्मणम् ॥ ६ ॥



[ सोमप्रायश्चित्तानि ]

ता वा ऽएताः । चतुस्त्रिꣳशद्व्याहृतयो भवन्ति प्प्रायश्चित्तयो नामैष वै प्प्रजापतिर्य्य ऽएष यज्ञस्तायते यस्म्मादिमाः प्प्रजाः प्प्रजाता ऽएतम्वेवाऽप्प्येतर्ह्यनु प्प्रजायन्ते ॥ १ ॥ अष्टौ व्वसवः । एकादश रुद्रा द्वादशाऽऽदित्या ऽइमेऽएव द्यावापृथिवी त्रयस्त्रिꣳश्यौ त्रयस्त्रिꣳशद्वै देवाः प्प्रजापतिश्चतुस्त्रिꣳशस्तदेनं प्रजापतिं करोत्त्येतद्वा ऽअस्त्येतद्ध्यमृतं यद्ध्यमृतं तद्ध्यस्त्येतदु तद्यन्म्मर्त्यꣳ स ऽएष प्प्रजापतिः सर्व्वं वै प्प्रजापतिस्तदेनं प्रजापतिं करोति तस्म्मादेताश्चतुस्त्रिꣳशद्व्याहृतयो भवन्ति प्प्रायश्चित्तयो नाम ॥ २ ॥ ता हैके । यज्ञं तन्न्व ऽइत्याचक्षते यज्ञस्य ह

(१) शु० सं० अ० ७. क० २९। (२) शु० सं० अ० ७. क० २९। (३) शु० सं० अ० ८ क० २९।

(F) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते— का० श० ५, ६, ३।

त्त्वेवैतानि पर्व्वाणि स ऽएष यज्ञस्तायमान ऽएता ऽएव देवता भवन्नेति ॥ ३ ॥ सा यदि घर्म्मदुघा ह्वलेत् । अन्न्यामुपसङ्क्रामेयुः स यस्यामेवैनां व्वेलायां पुरा पिन्न्वयन्ति तद्धैवैनामुदीचीᳬ स्त्थापयेदग्ग्रेण वा शालां प्राचीम् ॥ ४ ॥ तद्ये ऽएते ऽअभितः । पुच्छकाण्डᳬ शिखण्डास्त्थे ऽउच्छ्याते तयोर्य्यद्दक्षिणं तस्मिन्नेताश्चतुस्त्रिᳬशतमाज्याहुतीर्ज्जुहोत्त्येतावान्न्वै सर्व्वो यज्ञो यावत्य ऽएताश्चतुस्त्रिᳬशद्व्याहृतयो भवन्ति तदस्यां कृत्स्नमेव सर्व्वं य्यज्ञं दधात्त्येषा ह्वतो घर्म्मं पिन्न्वत ऽएषो तत्र प्प्रायश्चित्तिः क्रियते ॥ ५ ॥ अथ यद्यज्ञस्य ह्वलेत् । तत्समन्न्वीक्ष्य जुहुयाद्दीक्षोपसत्त्स्वाहवनीये प्प्रसुत ऽआग्नीध्रे व्वि वा ऽएतद्यज्ञस्य पर्व्व स्त्रᳬसते यद्ध्वलति सा यैव तर्हि तत्र देवता भवति तयैवैतद्भिषज्ज्यति तया सन्दधाति ॥ ६ ॥ अथ * यदि स्कन्देत् । तदद्भिरुपनिनयेदद्भिर्व्वा ऽइदᳬ सर्व्वमाप्तᳬ सर्व्वस्यैवाऽऽप्त्यै व्वैष्णववारुण्यर्च्चा यद्वा ऽइदं किञ्चार्च्छति व्वरुण ऽएवेदᳬ सर्व्वमार्प्पयति '(१)ययोरोजसा स्कभिता रजाᳬसि व्वीर्य्येभिर्व्वीरतमा शविष्ठा । या पत्त्येते ऽअप्रतीता सहोभिर्व्विष्णू ऽअगन्न्वरुणा पूर्व्वहूतावि'ति यज्ञो वै व्विष्णुस्तस्यैतदार्च्छति व्वरुणो वा ऽआर्प्पयिता तद्यस्याश्चैवैतद्देवताया ऽआर्च्छति यो च देवताऽऽर्प्पयति ताभ्यामेवैतदुभाभ्यां भिषज्ज्यत्युभाभ्याᳬ सन्दधाति ॥ ७ ॥ अथो ऽअभ्येव † मृशेत् ।

* का० श्रौ० सू० १०. ९. १ ।

(१) शु० सं० अ० ८ क० ५९ ।

† का० श्रौ० सू० २५. २. २७ ।

'देवान्दिवमगन्न्यज्ञस्ततो मा द्रविणमष्टु मनुष्यानन्तरिक्ष-मगन्न्यज्ञस्ततो मा द्रविणमष्टु पितॄन्पृथिवीमगन्न्यज्ञस्ततो मा द्रविणमष्टु यं कञ्च लोकमगन्न्यज्ञस्ततो मे भद्रम-भूदि'त्येवैतदाह ॥ ८ ॥ तद्ध स्मैतदारुणिराह । किꣳ स यजेत यो यज्ञस्य ऽऽर्त्या पापीयान्मन्येत यज्ञस्य वा-ऽअहं ऽऽर्त्या श्रेयान्भवामीत्येतद्ध स्म स तदभ्याह यदेता ऽआशिष ऽउपगच्छति ॥ ९ ॥ (G)

पञ्चमाध्याये सप्तमं ब्राह्मणम् ॥ ७ ॥



[ सहस्रदक्षिणा ]

तद्यत्रैतत्त्रिरात्रे सहस्रं ददाति । तदेषा साहस्री क्रियते स प्रथमेऽहँस्त्रीणि च शतानि नयति त्रयस्त्रिꣳ-शतं चैवमेव द्वितीयेऽहँस्त्रीणि चैव शतानि नयति त्रयस्त्रिꣳ-शतं चैवमेव तृतीयेऽहँस्त्रीणि चैव शतानि नयति त्रयस्त्रिꣳ-शतं चाऽथैषा * साहस्र्यतिरिच्यते ॥ १ ॥ सा वै त्रिरू-पा स्यादित्याहुः । एतद्ध्यस्यै रूपतममिवेति रोहिणी ह त्वेवोपध्वस्ता स्यादेतद्धैवाऽस्यै रूपतममिव ॥ २ ॥ सा स्या-दप्रवीता । वाग्वा ऽएषा निदानेन यत्साहस्र्ययातयाम्नी वा ऽइयं वागयातयाम्न्यप्रवीता तस्मादप्रवीता स्यात् ॥३॥ तां प्रथमेऽहन्नयेत् । वाग्वा ऽएषा निदानेन यत्साहस्री तस्या ऽएतत्सहस्रं वाचः प्रजातं पूर्वा हैषैति पश्चादेनां

( १ ) शु० सं० अ० ८ क० ६० ।

(G) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ५. ७. ४ ।

* का० श्रौ० सू० १३. ४. १४,१५ ।

प्रजातमन्न्वेत्युत्तमे वैनामहन्नयेत्पूर्वमहाऽस्यै प्प्रजातमेति पश्चचादेषाऽन्न्वेति सो ऽएषा मीमाᳬसैवोत्तम ऽएवैनामहन्नयेत्पूर्वमहाऽस्यै प्प्रजातमेति पश्चचादेषाऽन्न्वेति ॥ ४ ॥ तामुत्तरेण हविर्द्धाने । दक्षिणेनाऽऽग्नीध्रं * द्रोणकलशमवग्घ्रापयति यज्ञो वै द्रोणकलशो यज्ञमेवैनामेतद्दर्शयति ॥ ५ ॥ 'आजिग्घ्र कलशम् । मह्या त्वा विशन्त्विन्दव' ऽइति रिरिचान ऽइव वा ऽएष भवति यः सहस्रं ददाति तमेवैतद्रिरिचानं पुनराप्प्याययति यदाहाऽऽजिग्घ्र कलशं मह्या त्वा विशन्त्विन्दव ऽइति ॥ ६ ॥ 'पुनरूर्ज्जा निवर्त्तस्वे'ति । तद्धेव रिरिचानं पुनराप्प्याययति यदाह पुनरूर्ज्जा निवर्त्तस्वेति ॥ ७ ॥ 'सा नः सहस्रं धुक्ष्वे'ति । तत्सहस्रेण रिरिचानं पुनराप्प्याययति यदाह सा नः सहस्रं धुक्ष्वेति ॥ ८ ॥ 'उरुधारा पयस्वती पुनर्म्माऽऽविशताद्रयिरि'ति । तद्धेव रिरिचानं पुनराप्प्याययति यदाह पुनर्म्माऽऽविशताद्रयिरिति ॥९॥ अथ दक्षिणे † कर्ण्णे ऽआजपति । 'इडे रन्ते हव्ये काम्म्ये चन्द्रे ज्योतेऽदिति सरस्वति महि विश्रुति । एता तेऽअग्घ्न्ये नामानि देवेब्भ्यो मा सुकृतं ब्रूतादि'ति वोचेरिति वैतानि ह वा ऽअस्यै देवत्रा नामानि सा यानि ते देवत्रा नामानि तैर्म्मा देवेब्भ्यः सुकृतं ब्रूतादित्येवैतदाह ॥ १० ॥

* का० श्रौ० सू० १३. ४. १७ ।

(१) शु० सं० अ० ८ क० ४२। (२) शु० सं० अ० ८ क० ४२। (३) शु० सं० अ० ८ क० ४२। (४) शु० सं० अ० ८ क० ४२।

† का० श्रौ० सू० १३. ४. १८ ।

(५) शु० सं० अ० ८ क० ४३ ।

तामवार्जन्ति । सा यद्यपुरुषाऽभिवीता प्राचीयात्तत्र विद्यादुरात्सीदयं यजमानः कल्याणं लोकमजैषीदिति यद्युदीचीयाच्छ्रेयानस्मिँल्लोके यजमानो भविष्यतीति विद्याद्यदि प्रतीचीयाद्विभ्यतिल्विल ऽइव धान्यतिल्विलो भविष्यतीति विद्याद्यदि दक्षिणेयात्क्षिप्रेऽस्माल्लोकाद्यजमानः प्रैष्यतीति विद्यादेतानि विज्ञानानि ॥ ११ ॥ तद्या ऽएतास्तिस्रस्तिस्रस्त्रिंः शत्यधि भवन्ति । तास्वेतामुपसमाकुर्वन्ति वि वा ऽएतां विराजं वृहन्ति यां व्याकुर्वन्ति विच्छिन्नोऽएषा विराड्या विवृढा दशाक्षरा वै विराट् तत्कृत्स्नां विराजः सन्दधाति ताथं * होत्रे दद्याद्धोता हि साहस्रस्तस्मात्ताथं होत्रे दद्यात् ॥ १२ ॥ द्वौ वोन्नतारौ कुर्वीत । तयोरुर्यतरो नाऽऽश्रावयेत्तस्मा ऽएनां दद्याद्वृद्धो वाऽएष ऽउन्नेता य ऽऋत्विक् सन्नाऽऽश्रावयति वृद्धो ऽएषा विराड्या विवृढा तद्वृद्ध ऽएवैतद्वृद्धं दधाति ॥ १३ ॥ तदाहुः । न सहस्रेऽधि किञ्चन दद्यात्सहस्रेण ह्येव सर्वान्कामानाप्नोतीति तदु होवाचाऽऽसुरिः काममेव दद्यात्सहस्रेणाऽऽह सर्वान्कामानाप्नोति कामेनो ऽअस्येतरद्दत्तं भवतीति ॥ १४ ॥ अथ यदि रथं वा युक्तं दास्यन्त्स्यात् । यद्वा वशायै वा वपायाथं हुतायां दद्यादुदवसानीयायां वेष्टौ ॥ १५ ॥ स वै दक्षिणा नयन् । अन्यूना दशतो

* "सर्वतो नवसु दशमीं कृत्वा होत्रे दद्यात्, उन्नेतारौ वा वृत्वाऽनाश्रावयते, दश-दशाभेदेन दक्षिणा दद्यात्" ( का० श्रौ० सू० १३. ४. २०–२२ )।

अत्र देवयाज्ञिकः—

''दशभ्यो दशकौ दत्वा चतुर्भ्योऽष्टौ च पञ्चकाम् ।
द्विकेन पूरयेत् षड्भ्यः षड्भ्यो द्विकमिति स्थितिः ॥'' इति ।

नयेद्यस्म्मा ऽएकां दास्यन्त्स्याद्दशब्भ्यस्तेब्भ्यो दशतमुपावर्त्तयेद्यस्मै द्वे दास्यन्त्स्यात्पञ्चब्भ्यस्तेब्भ्यो दशतमुपावर्त्तयेद्यस्मै तिस्रो दास्यन्त्स्यात्त्रिब्भ्यस्तेब्भ्यो दशतमुपावर्त्तयेद्यस्मै पञ्च दास्यन्त्स्याद्द्वाब्भ्यां ताब्भ्यां दशतमुपावर्त्तयेदेवमा शतात्तथो हाऽस्यैषाऽन्न्यूना व्विराडमुष्मिँल्लोके कामदुघा भवति ॥ १६ ॥ (H)

पञ्चमाध्याये अष्टमं ब्राह्मणम् ॥ ८ ॥

माध्यन्दिनीये शतपथब्राह्मणे चतुर्थः प्रपाठकः ॥ ४ ॥
कण्डिकासंख्या ॥ १२५ ॥



[ व्यूढद्वादशाहधर्माः ]

तद्यत्रैतद्द्वादशाहेन * व्व्यूढच्छन्दसा यजते । तद्ग्रहान्व्व्यूहति व्व्यूहत ऽउद्गाता च होता च छन्दाᳬंसि स ऽएष प्प्रज्ञात ऽएव पूर्वस्त्र्यहो भवति † समूढच्छन्दास्तदैन्द्रवायवाग्रान्ग्गृह्णाति ॥ १ ॥ अथ चतुर्थेऽहन्व्व्यूहति । ग्रहान्व्व्यूहन्ति छन्दाᳬंसि तदाग्रयणाग्रान्ग्गृह्णाति प्प्राजापत्यं व्वा ऽएतच्चतुर्थमहब्भवत्यात्मा व्वा ऽआग्रयण ऽआत्मा

(H) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ५. ६. ५; तै० सं० ७. १. ५–७ ।

* का० श्रौ० सू० १२. ६. ३ ।

† समूढपक्षे व्यूढपक्षे च हौत्रे विशेषो हौत्रसूत्रे (आश्व० श्रौ० सू०, ऐ० ब्रा० च ४. १,२) ज्ञेयः । एवम् औद्गात्रे विशेषोऽपि लाट्यायनादौ द्रष्टव्यः ।

छन्दसां व्यूहनमपि व्यूढात्मके द्वादशाहे उक्तम्—"छन्दांसि वा अन्योन्यस्याऽऽयतनमभ्यध्यायन् गायत्री त्रिष्टुभा, त्रिष्टुब्जगत्या, जगती गायत्र्येति" ( ऐ० ब्रा० ४. ४. ५ ) ।

"स्वस्वस्थानविपरीतत्वेन ऊढानि स्थानान्तरे प्रक्षिप्तानि छन्दांसि यस्मिन् सोऽयं व्यूढच्छन्दा" ( ऐ० ब्रा० सा० भा० ४. ४. ५ ) इति ।

वै प्प्रजापतिस्तस्म्मादाग्रयणाग्रान्न्गृह्णाति ॥ २ ॥ तं गृहीत्त्वा न सादयति । प्राणा वै ग्रहा नेत्प्राणान्न्मोहयानीति मोहयेद्ध प्प्राणान्न्यत्त्सादयेत्तं धारयन्त ऽएवोपासतेऽथ ग्रहान्न्गृह्णात्त्यथ यदा ग्रहान्न्गृह्णात्त्यथ यत्रैवैतस्य कालस्तदेनꣳ हिङ्कृत्त्य सादयत्त्यथैतत्प्रज्ञातमेव पञ्चममहर्ब्भवति तदैन्द्रवायवाग्रान्न्गृह्णाति ॥ ३ ॥ अथ षष्ठेऽहन्न्व्यूहति । ग्रहान्न्व्यूहन्ति छन्दाꣳसि तच्छुक्राग्रान्न्गृह्णात्त्यैन्द्रं वा ऽएतत्त्षष्ठमहर्ब्भवत्त्येष वै शुक्रो य ऽएष तपत्त्येष ऽउ ऽएवेन्द्रस्तस्म्माच्छुक्राग्रान्न्गृह्णाति ॥ ४ ॥ तं गृहीत्त्वा न सादयति । प्राणा वै ग्रहा नेत्प्राणान्न्मोहयानीति मोहयेद्ध प्प्राणान्न्यत्त्सादयेत्तं धारयन्त ऽएवोपासतेऽथ ग्रहान्न्गृह्णात्त्यथ यदा ग्रहान्न्गृह्णात्त्यथ यत्रैवैतस्य कालस्तदेनꣳ सादयति ॥ ५ ॥ अथ सप्तमेऽहन्न्व्यूहति । गृहान्न्व्यूहन्ति छन्दाꣳसि तच्छुक्राग्रान्न्गृह्णाति बार्हतं वाऽएतत्त्सप्तममहर्ब्भवत्त्येष वै शुक्रो य ऽएष तपत्त्येष ऽउऽएव बृहँस्तस्म्माच्छुक्राग्रान्न्गृह्णाति ॥ ६ ॥ तं गृहीत्त्वा न सादयति । प्राणा वै गृहा नेत्प्राणान्न्मोहयानीति मोहयेद्ध प्प्राणान्न्यत्त्सादयेत्तं धारयन्त ऽएवोपासतेऽथ गृहान्न्गृह्णात्त्यथ यदा गृहान्न्गृह्णात्त्यथ यत्रैवैतस्य कालस्तदेनꣳ सादयत्त्यथैतत्प्रज्ञातमेवाऽष्टममहर्ब्भवति तदैन्द्रवायवाग्रान्न्गृह्णाति ॥ ७ ॥ अथ नवमेऽहन्न्व्यूहति गृहान्न्व्यूहन्ति छन्दाꣳसि तदाग्रयणाग्रान्न्गृह्णाति जागतं वा ऽएतन्नवममहर्ब्भवत्त्यात्मा वा ऽआग्रयणꣳ सर्व्वं वा ऽइदमात्मा जगत्त-

स्म्मादाग्रयणाग्रान्न्गृह्णाति ॥ ८ ॥ तं गृहीत्वा न सादयति । प्राणा वै ग्रहा नेत्प्राणान्न्मोहयानीति मोहयेद्ध प्प्राणान्न्यत्सादयेत्तं धारयन्त ऽएवोपासतेऽथ ग्रहान्न्गृह्णात्यथ यदा ग्रहान्न्गृह्णात्यथ यत्रैवैतस्य कालस्तदेनꣳ हिङ्कृत्य सादयति ॥ ९ ॥ तदाहुः । न व्व्यूहेद् ग्रहान्न्प्राणा वै ग्रहा नेत्प्राणान्न्मोहयानीति मोहयेद्ध प्प्राणान्न्यद्व्यूहेत्तस्स्मान्न व्व्यूहेत् ॥ १० ॥ तदु व्व्यूहेदेव । अङ्गानि वै ग्रहाः कामं वा ऽइमान्न्यङ्गानि व्व्यत्यासꣳ शेते तस्स्मादु व्व्यूहेदेव ॥ ११ ॥ तदु नैव व्व्यूहेत् । प्राणा वै ग्रहा नेत्प्राणान्न्मोहयानीति मोहयेद्ध प्प्राणान्न्यद् व्व्यूहेत्तस्स्मान्न व्व्यूहेत् ॥१२॥ किं नु तत्राऽद्ध्वर्य्योः । यदुद्गाता च होता च च्छन्दाꣳसि व्व्यूहत ऽएतद्वा ऽअद्ध्वर्य्युर्व्व्यूहति ग्रहान्न्यदैन्द्रवायवाग्रान्न्प्रातःसवने गृह्णाति शुक्राग्रान्न्माध्यन्दिने सवन ऽआग्रयणाग्राँस्तृतीयसवने ॥ १३ ॥ (1)

पञ्चमाध्याये नवमं ब्राह्मणम् ॥ ९ ॥



[ सोमापहरणादि ]

यदि सोममपहरेयुः । व्विधावतेच्छतेति ब्रूयात्स यदि व्विन्दन्ति किमाद्रियेरन्न्यद्यु न व्विन्दन्ति तत्र प्प्रायश्चित्तिः क्रियते ॥ १ ॥ द्वयानि वै फाल्गुनानि । लोहितपुष्पाणि चाऽरुणपुष्पाणि च स यान्न्यरुणपुष्पाणि फाल्गुनानि तान्न्यभिषुणुयादेष वै सोमस्य न्न्यङ्गो यदरुणपुष्पाणि फाल्गुनानि तस्स्मादरुणपुष्पाण्यभिषुणुयात् ॥ २ ॥ यद्यरुणपुष्पाणि न

(1) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ५. ६. ६; तै० सं० ७. १. ७।

विन्देयुः । श्येनहृतमभिषुणुयाद्यत्र वै गायत्री सोममच्छापतत्तस्या ऽआहरन्त्यै सोमस्याऽथंशुरपतत्तच्छ्येनहृतमभवत्तस्माच्छ्येनहृतमभिषुणुयात् ॥ ३ ॥ यदि श्येनहृतं न विन्देयुः । आदारानभिषुणुयाद्यत्र वै यज्ञस्य शिरोऽच्छिद्यत तस्य यो रसो व्यप्रुष्यत्तत ऽआदाराः समभवँस्तस्मादादारानभिषुणुयात् ॥ ४ ॥ यद्यादारान्न विन्देयुः । अरुणदूर्वा ऽअभिषुणुयादेष वै सोमस्य न्यङ्गो यदरुणदूर्वास्तस्मादरुणदूर्वा ऽअभिषुणुयात् ॥ ५ ॥ यद्यरुणदूर्वा न विन्देयुः । अपि यानेव काँश्च हरितान्कुशानभिषुणुयात्तत्राऽप्येकामेव गां दद्यादथाऽवभृथादुदेत्य पुनर्दीक्षेत पुनर्यज्ञो ह्येव तत्र प्रायश्चित्तिरिति नु सोमापहृतानाम् ॥ ६ ॥ अथ कलशदिराम् । यदि कलशो दीर्येताऽनुलिप्सद्धमिति ब्रूयात्स यद्यनुलभेरन् प्रसृतमात्रं वाऽञ्जलिमात्रं वा तदन्यैरेकधनैरभ्युन्नीय यथाप्रभावं प्रचरेयुर्यद्यु नाऽनुलभेरन्नाग्रयणस्यैव प्रस्कन्द्याऽन्यैरेकधनैरभ्युन्नीय यथाप्रभावं प्रचरेयुः स यद्यनीतासु दक्षिणासु कलशो दीर्येत तत्राऽप्येकामेव गां दद्यादथाऽवभृथादुदेत्य पुनर्दीक्षेत पुनर्यज्ञो ह्येव तत्र प्रायश्चित्तिरिति नु कलशदिराम् ॥७॥ अथ सोमातिरिक्तानाम् । यद्यग्निष्टोममतिरिच्येत पूतभृत ऽएवोक्थ्यं गृह्णीयाद्यद्युक्थ्यमतिरिच्येत षोडशिनमुपेयुर्यदि षोडशिनमतिरिच्येत रात्रिमुपेयुर्यदि रात्रिमतिरिच्येताऽहरुपेयुर्न्नैत्त्वेवाऽतीरेकोऽस्ति ॥८॥

पञ्चमाध्याये दशमं ब्राह्मणम् ॥ १० ॥

इति पञ्चमोऽध्यायः ॥ ५ ॥



[ अंशुग्रहः ]

प्रजापतिर्व्वा ऽएष यदꣳशुः सोऽस्यैष ऽआत्मैवाऽऽत्मा ह्ययं प्रजापतिस्तदस्यैतमात्मानं कुर्व्वन्ति यत्रैतं गृह्णन्ति तस्मिन्नेतान्प्राणान्दधाति यथा-यथैते प्प्राणा ग्रहा ऽव्याख्यायन्ते स ह सर्व्वतनूरेव यजमानोऽमुष्मिँल्लोके सम्भवति ॥ १ ॥ तदारम्भणवत् । यत्रैतं गृह्णन्त्यथैतदनारम्भणमिव यत्रैतं न गृह्णन्ति तस्माद्वा ऽअꣳशुं गृह्णाति ॥ २ ॥ तं व्वा ऽऔदुम्बरेण पात्रेण गृह्णाति । प्रजापतिर्व्वा ऽएष प्प्राजापत्य ऽउदुम्बरस्तस्माद्दौदुम्बरेण पात्रेण गृह्णाति ॥ ३ ॥ तं व्वै चतुःस्रक्तिना पात्रेण गृह्णाति । त्रयो वा ऽइमे लोकास्तदिमानेव लोकाँस्तिसृभिराप्प्नोति प्प्रजापतिर्व्वा ऽअतीमाँल्लोकाँश्चतुर्त्थस्तत्प्रजापतिमेव चतुर्त्थ्याप्नोति तस्माच्चतुःस्रक्तिना पात्रेण गृह्णाति ॥ ४ ॥ स व्वै तूष्णीमेव ग्रावाणमादत्ते । तूष्णीमꣳशून्निवपति तूष्णीमप ऽउपसृजति तूष्णीमुद्यत्य सकृदभिषुणोति तूष्णीमेनमनवानञ्जुहोति तदेनं प्रजापतिं करोति ॥ ५ ॥ अथाऽस्याꣳ हिरण्यं बद्धं भवति । तदुपजिघ्रति स यदेवाऽत्र क्षणुते वा व्वि वा लिशतेऽमृतमायुर्हिरण्यं तदमृतमायुरात्मन्धत्ते ॥ ६ ॥ तदु होवाच राम ऽऔपतस्विनिः । काममेव प्प्राणण्यात्काममुदन्न्याद्यद्वै तूष्णीं जुहोति तदेवैनं प्रजापतिं करोतीति ॥ ७ ॥ अथाऽस्याꣳ हिरण्यं बद्धं भवति । तदुपजिघ्रति स यदेवाऽत्र क्षणुते वा व्वि वा लिशतेऽमृतमायुर्हिरण्यं तदमृतमायुरात्मन्धत्ते ॥ ८ ॥ तदु होवाच बुडिल ऽआश्व-

तराश्विः । उद्यत्यैव गृह्णीयान्नाऽभिषुणुयादभिषुण्वन्ति वाऽअन्याभ्यो देवताभ्यस्तदन्यथा ततः करोति यथो चाऽन्याभ्यो देवताभ्योऽथ यदुद्यच्छति तदेवाऽस्याऽभिषुतं भवतीति ॥ ९ ॥ तदु होवाच याज्ञवल्क्यः । अभ्येव षुणुयान्न सोम ऽइन्द्रमसुतो ममाद नाऽब्रह्माणो मघवानᳪं सुतास ऽइत्यृषिणाऽभ्यनूक्तं न वा ऽअन्यस्यै कस्यै चन देवतायै सकृदभिषुणोति तदन्यथा ततः करोति यथो चाऽन्याभ्यो देवताभ्यस्तस्मादभ्येव षुणुयादिति ॥ १० ॥ तस्य द्वादश प्रथमगर्भाः । पष्ठौह्यो दक्षिणा द्वादश वै मासाः संवत्सरस्य संवत्सरः प्रजापतिः प्रजापतिरᳪंशुस्तदेनं प्रजापतिं करोति ॥ ११ ॥* तासां द्वादश गर्भाः । ताश्चतुर्विंᳪंशतिश्चतुर्विंᳪंशतिर्वै संवत्सरस्याऽर्द्धमासाः संवत्सरः प्रजापतिः प्रजापतिरᳪंशुस्तदेनं प्रजापतिं करोति ॥ १२ ॥ तदु ह कौकूस्तः । चतुर्विंᳪंशतिमेवैताः प्रथमगर्भाः पष्ठौहीर्दक्षिणा ददावृषभं पञ्चविंᳪंशᳪं हिरण्यमेतदु ह स ददौ ॥ १३ ॥ स वा ऽएष न सर्वस्येव ग्रहीतव्यः । आत्मा ह्यस्यैष यो न्वेव ज्ञातस्तस्य ग्रहीतव्यो यो वाऽस्य प्रियः स्याद्यो वाऽनूचानोऽनूक्तेनैनं प्राऽऽप्नुयात् ॥ १४ ॥ सहस्रे ग्रहीतव्यः । सर्वं वै सहस्रᳪं सर्वमेष सर्ववेदसे ग्रहीतव्यः सर्वं वै सर्ववेदसᳪं सर्वमेष विश्वजिति सर्वपृष्ठे ग्रहीतव्यः सर्वं वै विश्वजित्सर्वपृष्ठः सर्वमेष वाजपेये राज-

* अत्र शतम् २८०० ॥

सूये ग्रहीतव्यः सर्व्वंᳪं हि तत्सत्रे ग्रहीतव्यᳪं सर्वं वै सत्रᳪं सर्व्वमेष ऽएतानि ग्रहणानि ॥ १५ ॥ (A)

षष्ठाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



[ अतिग्राह्यग्रहग्रहणम् ]

एतं वा ऽएते गच्छन्ति । षड्भिर्म्मासैरूर्ध्वं ऽएष तपति ये संवत्सरमासते तदुच्च्यत ऽएव सामतो यथैतस्य रूपं क्रियत ऽउच्च्यत ऽऋक्तोऽथैतदेव यजुष्टᳪं पुरश्चरणतो यदेतं गृह्णन्त्येतेनो ऽएवैनं गच्छन्ति ॥ १ ॥ अथाऽतो * गृह्णात्येव । उदु त्यं जातवेदसं देवं वहन्ति केतवᳪं । दृशे विश्वाय सूर्य्यम् । उपयामगृहीतोऽसि सूर्य्याय त्वा भ्राजायैष ते योनिᳪं सूर्य्याय त्वा भ्राजायेति ॥ २ ॥ (B)

षष्ठाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥



[ पश्वयनस्तोमायने ]

अथाऽतᳪं पश्वयनस्यैव । पश्वेकादशिन्न्यैवेयात्स-ऽआग्नेयं प्रथमं पशुमालभतेऽथ वारुणमथ पुनराग्नेयमेवमेवैतया पश्वेकादशिन्न्येयात् ॥ १ ॥ अथो ऽअप्प्यैन्द्राग्नमेवाऽहरहᳪं पशुमालभेत । अग्निर्वै सर्वा देवता ऽअग्नौ हि सर्वाभ्यो देवताभ्यो जुह्वतीन्द्रो वै यज्ञस्य देवता तत्सर्वाश्चैवैतद्देवता

(A) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ५. ८. १ ।

* का० श्रौ० सू० १३. २. १४ ।

(१) शु० सं० अ० ८ क० ४१ ।

(B) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ५. ७. २ ।

नाऽपराध्नोति यो च यज्ञस्य देवता तां नाऽपराध्नोति ॥ २ ॥ अथाऽत स्तोमायनस्यैव । आग्नेयमग्निष्टोम ऽआलभेत तद्धि सलोम यदाग्नेयमग्निष्टोम ऽआलभेत यद्युक्थ्यः स्यादैन्द्राग्नं द्वितीयमालभेतैन्द्राग्नानि ह्युक्थानि यदि षोडशी स्यादैन्द्रं तृतीयमालभेतेन्द्रो हि षोडशी यद्यतिरात्रः स्यात्सारस्वतं चतुर्थमालभेत वाग्वै सरस्वती योषा वै वाग्योषा रात्रिस्तद्यथायथं य्यज्ञक्रतून्व्यावर्त्तयत्येतानि त्रीण्ययनानि तेषां यतमत्कामयेत तेनेयादृष्टा ऽउपालभ्यौ पशू सौर्य्यं द्वितीयं पशुमालभते वैषुवतेऽहन्प्राजापत्यं महाव्रते ॥ ३ ॥ (C)

षष्ठाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

[ महाव्रतीयः ]

अथाऽतो महाव्रतीयस्यैव । प्रजापतेर्ह वै प्प्रजाः ससृजानस्य पर्व्वाणि विसस्रꣳसुः स विस्रस्तैः पर्व्वभिर्न्न शशाक सꣳहातुं ततो देवा ऽअर्च्चन्तः श्राम्म्यन्तश्चेरुस्त ऽएतं महाव्रतीयं ददृशुस्तमस्म्मा ऽअगृह्णँस्तेनाऽस्य पर्व्वाणि समदधुः ॥ १ ॥ स सꣳहितैः पर्व्वभिः । इदमन्नाद्यमभ्युत्तस्थौ यदिदं प्रजापतेरन्नाद्यं य्यद्वै मनुष्याणामशनं तद्देवानां व्रतं महद्वा ऽइदं व्रतमभूद्येनाऽयꣳ समहास्तेति तस्म्मान्महाव्रतीयो नाम ॥ २ ॥ एवं वा ऽएते भवन्ति । ये संवत्सरमासते यथैव तत्प्रजापतिः प्प्रजाः ससृजान-

(C) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ५. ७. २ ।

ऽआसीत्स यथैव तत्प्रजापतिः संवत्सरेऽन्नाद्यमभ्युदतिष्ठदेवमेवैत ऽएतत्संवत्सरेऽन्नाद्यमभ्युत्तिष्ठन्ति येषामेवं विदुषामेतं ग्रहं गृह्णन्ति ॥ ३ ॥ तं वा ऽइन्द्रायैव * विमृधे गृह्णीयात् । सर्वा वै तेषां मृधो हता भवन्ति सर्वं जितं ये संवत्सरमासते तस्माद्विमृधे 'वि[1] न ऽइन्द्र मृधो जहि नीचा यच्छ पृतन्यतः । यो ऽअस्माँ२ ऽअभिदासत्यधरं गमया तमः । उपयाम गृहीतोऽसीन्द्राय त्वा विमृध ऽएष ते योनिरिन्द्राय त्वा विमृध' ऽइति ॥ ४ ॥ अथो विश्वकर्म्मणे । विश्वं वै तेषां कर्म्म कृतः सर्वं जितं भवति ये संवत्सरमासते तस्माद्विश्वकर्म्मणे 'वाचस्पतिं[2] विश्वकर्म्माणमूतये मनोजुवं वाजे ऽअद्या हुवेम । स नो विश्वानि हवनानि जोषद्विश्वशम्भूरवसे साधुकर्म्मा । उपयाम गृहीतोऽसीन्द्राय त्वा विश्वकर्म्मण ऽएष ते योनिरिन्द्राय त्वा विश्वकर्म्मण' ऽइति ॥ ५ ॥ यद्यु ऽऐन्द्रीं वैश्वकर्म्मणीं विद्यात् । तथैव गृह्णीया'द्वि[3]श्वकर्म्मन्हविषा वर्द्धनेन त्रातारमिन्द्रमकृणोरवध्यम् । तस्मै विशः समनमन्त पूर्वीरयमुग्रो वि हव्यो यथासत् । उपयामगृहीतोऽसीन्द्राय त्वा विश्वकर्म्मण ऽएष ते योनिरिन्द्राय त्वा विश्वकर्म्मण'ऽइति ॥ ६ ॥ (D)

षष्ठाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥



* का० श्रौ० सू० १३. २. २३ ।

( १ ) शु० सं० अ० ८ क० ४४ । ( २ ) शु० सं० अ० ८ क० ४५ । ( ३ ) शु० सं० अ० ८ क० ४६ ।

( ) ——— भिन्ना अन्यत्राऽप्युपलभ्यन्ते— का० श० ५. ७. ४ ।

[ ग्रहस्तुतिः ]

एष वै ग्रहः । य ऽएष तपति येनेमाः सर्वाः प्रजा गृहीतास्तस्मादाहुर्ग्रहान्गृहीम ऽइति चरन्ति ग्रहगृहीताः सन्त ऽइति ॥ १ ॥ वागेव ग्रहः । वाचा हीदꣳ सर्वं गृहीतं किमु तद्यद्वाग्ग्रहः ॥ २ ॥ नामैव ग्रहः । नाम्ना हीदꣳ सर्वं गृहीतं किमु तद्यन्नाम ग्रहो बहूनां वै नामानि विद्माऽथ नस्तेन ते न गृहीता भवन्ति ॥ ३ ॥ अन्नमेव ग्रहः । अन्नेन हीदꣳ सर्वं गृहीतं तस्माद्यावन्तो नोऽशनमश्नन्ति ते नः सर्वे गृहीता भवन्त्येषैव स्थितिः ॥ ४ ॥ स य ऽएष सोमग्रहः । अन्नं वा ऽएष स यस्यै देवताया ऽएतं ग्रहं गृह्णाति साऽस्मै देवतैतेन ग्रहेण गृहीता तं कामꣳ समर्द्धयति यत्काम्या गृह्णाति स ऽउद्यन्तं वाऽऽदित्यमुपतिष्ठतेऽस्तं यन्तं वा गृहोऽस्यमुमनयाऽऽर्त्या गृहाणाऽसावदोमा प्रापदिति यं द्विष्यादसावस्मै कामो मा समर्द्धीति वा न हैवाऽस्मै स कामः समृद्ध्यते यस्मा-ऽएवमुपतिष्ठते ॥ ५ ॥ (E)

षष्ठाध्याये पञ्चमं ब्राह्मणम् ॥ ५ ॥

[ सौमिकं ब्रह्मत्वम् ]

देवा ह वै यज्ञं तन्वानाः । तेऽसुररक्षसेभ्य ऽआसङ्गाद्बिभयाञ्चक्रुस्ते होचुः को नो दक्षिणत ऽआसिष्यतेऽथाऽभयेऽनाष्ट्र ऽउत्तरतो यज्ञमुपचरिष्याम ऽइति ॥ १ ॥

(E) एतद्ब्राह्मणगतविषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ५. ७. १ ।

ते होचुः । स ऽएव नो वीर्य्यवत्तमः स दक्षिणत ऽआस्तामथाऽभयेऽनाष्ट्र ऽउत्तरतो यज्ञमुपचरिष्याम ऽइति ॥ २ ॥ ते होचुः । इन्द्रो वै नो वीर्य्यवत्तम ऽइन्द्रो दक्षिणतऽआस्तामथाऽभयेऽनाष्ट्र ऽउत्तरतो यज्ञमुपचरिष्याम ऽइति ॥३॥ ते हेन्द्रमूचुः । त्वं वै नो वीर्य्यवत्तमोऽसि त्वं दक्षिणतऽआस्वाऽथाऽभयेऽनाष्ट्र ऽउत्तरतो यज्ञमुपचरिष्याम ऽइति ॥ ४ ॥ स होवाच । किं मे ततः स्यादिति ब्राह्मणाच्छंसिस्या ते ब्रह्मसाम त ऽइति तस्माद्ब्राह्मणाच्छंसिनं प्रवृणीत ऽइन्द्रो ब्रह्मा ब्राह्मणादितीन्द्रस्य ह्येषा स ऽइन्द्रो दक्षिणत ऽआस्ताऽथाऽभयेऽनाष्ट्र ऽउत्तरतो यज्ञमुपाऽऽचरँस्तस्माद्य ऽएव वीर्य्यवत्तमः स्यात्स दक्षिणत ऽआसीताऽथाऽभयेऽनाष्ट्र ऽउत्तरतो यज्ञमुपचरेयुर्यो वै ब्राह्मणानामनूचानतमः स ऽएषां वीर्यवत्तमोऽथ यदिदं य ऽएव कश्च ब्रह्मा भवति कुवित्तूष्णीमास्त ऽइति तस्माद्य ऽएव वीर्य्यवत्तमः स्यात्स दक्षिणत ऽआसीताऽथाऽभयेऽनाष्ट्र ऽउत्तरतो यज्ञमुपचरेयुस्तस्माद्ब्राह्मणा दक्षिणत ऽआसतेऽथाऽभयेऽनाष्ट्र ऽउत्तरतो यज्ञमुपचरन्ति ॥ ५ ॥ स यत्राऽऽह । ब्रह्मन्त्स्तोष्यामः प्रशास्तरिति तद्ब्रह्मा *जप'त्येतं ते देव सवितर्य्यज्ञं प्राहुर्बृहस्पतये ब्रह्मणे । तेन यज्ञमव तेन यज्ञपतिं तेन मामव । स्तुत सवितुः प्रसव' ऽइति सोऽसावेव बन्धुरेतेन न्वेव भूयिष्ठा ऽइवोपचरन्ति ॥ ६ ॥ अनेन त्वेवोपचरेत् । 'देव सवितरेतद्बृहस्पते प्रेति' तत्स-

* का० श्रौ० सू० २. २. १९।
(१) का० सं० अ० २ क० १२।

वितारं प्रसवायोपधावति स हि देवानां प्रसविता बृहस्पते प्प्रेति बृहस्पतिर्वै देवानां ब्रह्मा तद्य ऽएव देवानां ब्रह्मा तस्मा ऽएवैतत्प्राऽऽह तस्मादाह बृहस्पते प्प्रेति ॥ ७ ॥ अथ मैत्रावरुणो जपति । 'प्रसूतं देवेन सवित्रा जुष्टं मित्रावरुणाभ्यामि'ति तत्सवितारं प्रसवायोपधावति स हि देवानां प्रसविता जुष्टं मित्रावरुणाभ्यामिति मित्रावरुणौ वै मैत्रावरुणस्य देवते तद्ये ऽएव मैत्रावरुणस्य देवते ताभ्यामेवैतत्प्राऽऽह तस्मादाह जुष्टं मित्रावरुणाभ्यामिति ॥ ८ ॥ (F)

षष्ठाध्याये षष्ठं ब्राह्मणम् ॥ ६ ॥



[ ब्रह्मत्व-सदो-हविर्धान-विधिशेषः ]

त्रयी वै विद्या । ऋचो यजूᳪंषि सामानीयमेव र्च्चोऽस्याᳪं ह्यर्च्चति योऽर्च्चति स व्वागेवर्च्चो व्वाचा ह्यर्च्चति योऽर्च्चति सोऽन्तरिक्षमेव यजूᳪंषि द्यौः सामानि सैषा त्रयी विद्या सौम्म्येऽध्वरे प्प्रयुज्यते ॥ १ ॥ इममेव लोकमृचा जयति । अन्तरिक्षᳪं यजुषा दिवमेव साम्म्ना तस्माद्यस्यैका विद्याऽनूक्ता स्यादुक्ष्वेवाऽपीतरयोर्न्निर्म्मितं विवक्षेतेममेव लोकमृचा जयत्यन्तरिक्षᳪं यजुषा दिवमेव साम्म्ना ॥ २ ॥ तद्वा ऽएतत् । सहस्रं व्वाचः प्प्रजातं द्वे ऽइन्द्रस्तृतीये तृतीयं व्विष्णुर्ऋचश्च सामानि चेन्द्रो यजूᳪंषि व्विष्णुस्तस्मात्सदस्यृक्सामाभ्यां कुर्वन्त्यैन्द्रᳪं हि सदः ॥ ३ ॥ [अर्धप्रपाठकः ६२ ॥] अथैतं व्विष्णुᳪं यज्ञम् । एतैर्य्यजुर्भिः पुर-

(F) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ५, ७, ६ ।

ऽइवैव बिभ्रति तस्मात्पुरश्चरणं नाम ॥४॥ वागेवर्च्चश्च सामानि च । मन ऽएव यजूᳬषि सा यत्रेयं वागासीत्सर्व्वमेव तत्राऽक्रियत सर्वं प्राऽज्ञायताऽथ यत्र मन ऽआसीन्नैव तत्र किञ्चनाऽक्रियत न प्राऽज्ञायत नो हि मनसा ध्यायतः कश्चनाऽऽजानाति ॥५॥ ते देवा वाचमब्रुवन् । प्राची प्रेहीदं प्रज्ञपयेति सा होवाच किं मे ततः स्यादिति यत्किञ्चाऽवषट्कृतᳬ स्वाहाकारेण यज्ञे हूयते तत्त ऽइति तस्माद्यत्किञ्चाऽवषट्कृतᳬ स्वाहाकारेण यज्ञे हूयते तद्वाचः सा प्राची प्रैत्सैतत्प्राज्ञपयदितीदं कुरुतेतीदं कुरुतेति ॥ ६ ॥ तस्मादु कुर्व्वन्त्येवर्च्चा हविर्द्धाने । प्रातरनुवाकमन्वाह सामिधेनीरन्वाह ग्राव्णोऽभिष्टौत्येवᳪ हि सयुजावभवताम् ॥ ७ ॥ तस्मादु कुर्व्वन्त्येव सदसि । यजुषौदुम्बरीमुच्छ्रयन्ति सदः सम्मिन्वन्ति धिष्ण्यानुपकिरन्त्येवᳪ हि सयुजावभवताम् ॥ ८ ॥ तद्वाऽएतत्सदः परिश्रयन्ति । एतस्मै मिथुनाय तिर ऽइवेदं मिथुनं चर्य्याता ऽइति व्यृद्धं वा ऽएतन्मिथुनं यदन्यः पश्यति तस्माद्यद्यपि जायापती मिथुनं चरन्तौ पश्यन्ति व्येव द्रवत ऽआग ऽएव कुर्वाते तस्माद्द्वारेण सदः प्रेक्षमाणं ब्रूयान्मा प्रेक्षथा ऽइति यथा ह मिथुनं चर्य्यमाणं पश्येदेवं तत्कामं द्वारेण देवकृतᳪ हि द्वारम् ॥ ९ ॥ एवमेवैतद्धविर्द्धानं परिश्रयन्ति । एतस्मै मिथुनाय तिर ऽइवेदं मिथुनं चर्य्याता ऽइति व्यृद्धं वा ऽएतन्मिथुनं यदन्यः पश्यति तस्माद्यद्यपि जायापती मिथुनं चरन्तौ पश्यन्ति व्येव द्रवत ऽआग ऽएव कुर्वाते तस्माद्द्वारेण हविर्द्धानं

प्रेक्षमाणं ब्रूयान्मा प्प्रेक्षथा ऽइति यथा ह मिथुनं चर्य्यमाणं पश्येदेवं तत्कामं द्वारेण देवकृतꣳ हि द्वारम् ॥ १० ॥ तद्वा ऽएतद् । वृषा साम योषामृचꣳ सदस्यच्छेति तस्स्मा-द्मिथुनादिन्द्रो जातस्तेजसो वै तत्तेजो जातं यदृचश्च साम्म्नश्चेन्द्र ऽइन्द्र ऽइति ह्येतमाचक्षते य ऽएष तपति ॥ ११ ॥ अथैतद् वृषा सोमꣳ । योषा ऽअपो हविर्द्धाने-ऽच्छेति तस्स्मान्मिथुनाच्चन्द्रमा जातोऽन्नाद्वै तदन्नं जातं यदद्भ्यश्च सोमाच्च चन्द्रमाश्चन्द्रमा ह्येतस्याऽन्नं य-ऽएष तपति तद्यजमानं चैवैतज्जनयत्यन्नाद्यं चाऽस्स्मै जनय-त्यृचश्च साम्म्नश्च यजमानं जनयत्यद्भ्यश्च सोमाच्चा-ऽस्स्माऽन्नाद्यम् ॥ १२ ॥ यजुषा ह वै देवाꣳ । अग्रे यज्ञं तेनिरेऽथर्च्चाऽथ साम्म्ना तदिदमप्प्येतर्हि यजुषैवाऽग्रे यज्ञं तन्वतेऽथर्च्चाऽथ साम्म्ना यजो ह वै नामैतद्यद्यजुरिति ॥ १३ ॥ यत्र वै देवाꣳ । इमा विद्याꣳ कामान्दुदुह्रे तद्ध यजुर्व्वि-द्यैव भूयिष्ठान्कामान्दुदुहे सा निर्द्धीततमेवाऽऽस सा नेतरे विद्ये प्प्रत्त्यास नाऽन्तरिक्षलोक ऽइतरौ लोकौ प्प्रत्त्यास ॥ १४ ॥ ते देवा ऽअकामयन्त । कथं न्न्वियं विद्येतरे विद्ये प्प्रातिस्यात्कथमन्तरिक्षलोक ऽइतरौ लोकौ प्प्रातिस्यादिति ॥ १५ ॥ ते होचुꣳ । उपाꣳश्वेव यजुर्भिश्चराम तत ऽएषा विद्येतरे विद्ये प्रतिभवि-ष्यति ततोऽन्तरिक्षलोक ऽइतरौ लोकौ प्प्रति भवि-ष्यतीति ॥ १६ ॥ तैरुपाꣳश्वचरन् । आप्याययन्नेवैनानि तत्तत ऽएषा विद्येतरे विद्ये प्प्रत्त्यासीत्ततोऽन्तरिक्षलोक-

ऽइतरौ लोकौ प्प्रत्यासीत्तस्म्माद्यजूꣳषि निरुक्तानि सन्त्यनिरुक्तानि तस्म्मादयमन्तरिक्षलोको निरुक्तꣳ सन्ननिरुक्तꣳ ॥ १७ ॥ स य ऽउपाꣳशु यजुर्ब्भिश्च्चरति । आप्प्यायत्त्येवैनानि स तान्न्येनमापीनान्न्याऽऽप्प्याययन्त्यथ य ऽउच्चैश्च्चरति रूक्षयत्त्येवैनानि स तान्न्येनꣳ रूक्षाणि रूक्षयन्ति ॥ १८ ॥ वागेवर्च्चश्च्च सामानि च । मन ऽएव यजूꣳषि स य ऽऋचा च साम्म्ना च चरन्ति वाक्ते भवन्त्यथ ये यजुषा चरन्ति मनस्ते भवन्ति तस्म्मान्नाऽनभिप्प्रेषितमद्ध्वर्य्युणा किञ्चन क्रियते यद्वैवाऽद्ध्वर्य्युराहाऽनुब्रूहि यजेत्यथैव ते कुर्वन्ति य ऽऋचा कुर्वन्ति यद्वैवाऽद्ध्वर्य्युराह सोमꣳ पवत ऽउपावर्त्तद्ध्वमित्यथैव ते कुर्वन्ति ये साम्म्ना कुर्वन्ति नो ह्यनभिगतं मनसा वाग्वदति ॥ १९ ॥ तद्वा ऽएतन्मनोऽद्ध्वर्य्युः । पुर ऽइवैव चरति तस्मात्पुरश्च्चरणं नाम पुर ऽइव ह वै श्रिया यशसा भवति य ऽएवमेतद्वेद ॥२०॥ तद्वा ऽएतदेव पुरश्च्चरणम् । य ऽएष तपति स ऽएतस्यैवाऽऽवृता चरेद् ग्रहं गृहीत्वैतस्यैवाऽऽवृतमन्वावर्त्तेत प्प्रतिगीर्य्यैतस्यैवाऽऽवृतमन्वावर्त्तेत ग्रहꣳ हुत्वैतस्यैवाऽऽवृतमन्वावर्त्तेत स ह्येष भर्त्ता स यो हैवं विद्वानेतस्याऽऽवृता शक्नोति चरितुꣳ शक्नोति हैव भार्य्यान्भर्त्तुम् ॥ २१ ॥ (G)

षष्ठाध्याये सप्तमं ब्राह्मणम् ॥ ७ ॥



(G) एतद्ब्राह्मणगतविषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ५. ८. ४ ।

[ सत्रायणम् ]

या वै दीक्षा सा निषत्। तत्सत्रं तस्मादेना नाऽऽसत-ऽइत्याहुरथ यत्ततो यज्ञं तन्वते तद्यन्ति तन्नयति यो नेता भवति स तस्मादेनान्नयन्तीत्याहुः ॥ १ ॥ या ह दीक्षा सा निषत्। तत्सत्रं तदयनं तत्सत्रायणमथ यत्ततो यज्ञस्योदृचं गत्वोत्तिष्ठन्ति तदुत्थानं तस्मादेनानुदस्थुरित्याहुरिति नु पुरस्ताद्वदनम् ॥ २ ॥ अथ दीक्षिष्यमाणाः समवस्यन्ति। ते यद्यग्निं चेष्यमाणा भवन्त्यरणिष्वेवाऽग्नीन्त्समारोह्योपसमायन्ति यत्र प्राजापत्येन पशुना यक्ष्यमाणा भवन्ति मथित्वोपसमाधायोद्धृत्याऽऽहवनीयं यजन्तऽएतेन प्राजापत्येन पशुना ॥ ३ ॥ तस्य शिरो निधाति। तेषां यदि तदहर्दीक्षा न समैत्यरणिष्वेवाऽग्नीन्त्समारोह्य यथायथं विपरेत्य जुह्वति ॥ ४ ॥ अथ यदहरेषां दीक्षा समैति। अरणिष्वेवाऽग्नीन्त्समारोह्योपसमायन्ति यत्र दीक्षिष्यमाणा भवन्ति गृहपतिरेव प्रथमो मन्थते मध्यं प्रति शालाया ऽअथेतरेषामर्द्धा दक्षिणत ऽउपविशन्त्यर्द्धा-ऽउत्तरतो मथित्वोपसमाधायैकैकमेवोल्मुकमादायोपसमायन्ति गृहपतेर्गार्हपत्यं गृहपतेरेव गार्हपत्यादुद्धृत्याऽऽहवनीयं दीक्षन्ते तेषाᳬं समान ऽआहवनीयो भवति नाना गार्हपत्या दीक्षोपसत्सु ॥ ५ ॥ अथ यदहरेषां क्रयो भवति। तदहर्गार्हपत्यां चितिमुपदधात्यथेतरेभ्य-ऽउपवसथे धिष्ण्याञ्चैवसार्ज्जिनानां काले प्राञ्च्यः पत्न्य-ऽउपसमायन्ति प्रजहत्येतानपरानग्नीन्हुत ऽएव वैस-

र्ज्जिने ॥ ६ ॥ राजानं प्रणयति । उद्यत ऽएवैष ऽआग्नीध्रीयोऽग्निर्भवत्यथैत ऽएकैकमेवोल्मुकमादाय यथाधिष्ण्यं व्विपरायन्ति तैरेव तेषामुल्मुकैः प्प्रघ्नन्तीति ह स्म्माऽऽह याज्ञवल्क्यो ये तथा कुर्वन्तीत्येतन्न्वेकमयनम् ॥ ७ ॥ अथेदं द्वितीयम् । अरणिष्व्वेवाऽग्नीन्त्समारोह्योपसमायन्ति यत्र प्प्राजापत्येन पशुना यक्ष्यमाणा भवन्ति मथित्वोपसमाधायोद्धृत्याऽऽहवनीयं य्यजन्त ऽएतेन प्प्राजापत्येन पशुना ॥ ८ ॥ तस्य शिरो निदधति । तेषां य्यदि तदहर्दीक्षा न समैत्यरणिष्व्वेवाऽग्नीन्त्समारोह्य यथायथं व्विपरेत्य जुह्वति ॥ ९ ॥ अथ यदहरेषां दीक्षा समैति । अरणिष्व्वेवाऽग्नीन्त्समारोह्योप समायन्ति यत्र दीक्षिष्यमाणा भवन्ति गृहपतिरेव प्प्रथमो मन्थतेऽथेतरे पर्य्युपविश्य मन्थन्ते ते जातं—जातमेवाऽनुप्प्रहरन्ति गृहपतेर्गार्हपत्ये गृहपतेरेव गार्हपत्यादुद्धृत्याऽऽहवनीयं दीक्षन्ते तेषाᳩं समान ऽआहवनीयो भवति समानो गार्हपत्यो दीक्षोपसत्सु ॥ १० ॥ अथ यदहरेषां क्रयो भवति । तदहर्ग्गार्हपत्यां चितिमुपदधात्यथेतरेभ्य ऽउपवसथे धिष्ण्यान्न्वैसर्ज्जिनानां काले प्प्राच्च्यः पत्न्यऽउपसमायन्ति प्प्रजहत्येतमपरमग्निᳪं हुत ऽएव व्वैसर्ज्जिने ॥ ११ ॥ राजानं प्रणयति । उद्यत ऽएवैष ऽआग्नीध्रीयोऽग्निर्भवत्यथैत ऽएकैकमेवोल्मुकमादाय यथाधिष्ण्यं व्विपरायन्ति समदमु हैव ते कुर्वन्ति समर्द्धेनाश्विन्दत्यर्त्तुका ह भवन्त्यपि ह तमर्द्धः समाद्विन्दति यस्मिन्नर्द्धे यजन्ते ये तथा कुर्वन्त्येतद्ध द्वितीयमयनम् ॥ १२ ॥ अथेदं तृतीयम् ।

तद्यदस्य तन्नामाऽकरोदादित्यस्तद्रूपमभवदादित्यो वा ऽईशा न ऽआदित्यो ह्यस्य सर्वस्येष्टे सोऽब्रवीदेतावान्वा ऽअस्मि मामेतः परो नाम धा ऽइति ॥ १७ ॥ तान्येतान्यष्टा-वग्निरूपाणि । कुमारो नवमः सैवाऽग्नेस्त्रिवृत्ता ॥ १८ ॥ यद्वेवाऽष्टावग्निरूपाणि । अष्टाक्षरा गायत्री तस्मादाहु-र्गायत्रोऽग्निरिति सोऽयं कुमारो रूपाण्यनु प्राऽऽविशन्न वा ऽअग्निं कुमारमिव पश्यन्त्येतान्येवाऽस्य रूपाणि पश्यन्त्ये-तानि हि रूपाण्यनु प्राऽऽविशत् ॥ १९ ॥ तमेतः संवत्सर-ऽएव चिनुयात् । संवत्सरे*ऽनुब्रूयाद् द्वयोरित्यु हैक ऽआहुः संवत्सरे वै तद्रेतोऽसिञ्चन्त्स संवत्सरे कुमारोऽजायत तस्माद् द्वयोरेव चिनुयाद् द्वयोरनुब्रूयादिति संवत्सरे त्वेव चिनुयात्संवत्सरेऽनुब्रूयाद्यद्वाऽवरेतः सिक्तं तदेव जायते तत्ततो विक्रियमाणमेव वर्द्धमानः शेते तस्मात्संवत्सर-ऽएव चिनुयात्संवत्सरेऽनुब्रूयात्तस्य चितस्य नाम करोति पाप्मानमेवाऽस्य तदुपहन्ति चित्रनामानं करोति चित्रो-ऽसीति सर्वाणि हि चित्राण्यग्निः ॥ २० ॥ (C)

प्रथमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

इति प्रथमोऽध्यायः ॥ १ ॥



* ऐ० आ० ५. ३. ३. ४ ।

(C) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—— का० श० ८. १. ३ ।

[ अथ पुरुषाश्वादिपञ्चपश्वालम्भनविधिः ]

( तत्र चतुर्विंशतिसामिधेन्यादिः, इष्टकोपधानादिकं च )

प्रजापतिरग्निरूपाण्यभ्यध्यायत् । स यो ऽयं कुमारो रूपाण्यनु प्प्रविष्ट ऽआसीत्तमन्न्वैच्छत्सो ऽग्निरवेदनु वै मा पिता प्प्रजापतिरिच्छति हन्त तद्रूपमसानि यन्न्म- ऽएष न वेदेति ॥ १ ॥ स ऽएतान्न्पञ्च पशूनपश्श्यत् । * पुरुषमश्वं गामविमजं यदपश्श्यत्तस्म्मादेते पशवः ॥ २ ॥ स ऽएतान्न्पञ्च पशून्न्प्राऽऽविशत् । स ऽएते पञ्च- पशवोऽभवत्तमु वै प्प्रजापतिरन्न्वेवैच्छत् ॥ ३ ॥ स ऽएतान् न्पञ्च पशूनपश्श्यत् । यदपश्श्यत्तस्म्मादेते पशवस्तेष्वेतमप- श्श्यत्तस्म्माद्वेवैते पशवः ॥ ४ ॥ स ऽऐक्षत । इमे वा ऽअग्नि- रिमानेवाऽऽत्मानमभिसंस्करवै यथा वा ऽअग्निः समिद्धो दीप्प्यत ऽएवमेषां चक्षुर्द्दीप्प्यते यथाऽग्नेर्द्धूम ऽउदयत- ऽएवमेषामूष्मोदयते यथाऽग्निरभ्याहितं दहत्येवं बप्प्सति यथाऽग्नेर्भस्म्म सीदत्येवमेषां पुरीषं सीदतीमे वा ऽअग्नि- रिमानेवाऽऽत्मानमभिसंस्करवा ऽइति तान्नाना देवताभ्य- ऽआलिप्प्सत वैश्वकर्म्मणं पुरुषं वारुणमश्वमैन्द्रमृषभं त्वाष्ट्र- मविमाग्नेयमजं ॥ ५ ॥ स ऽऐक्षत । नाना वा ऽइदं देवताभ्य ऽआलिप्प्सेऽग्नेर्वहं रूपाणि कामये हन्तैनानग्नि- भ्यः कामायाऽऽलभा ऽइति तानग्निभ्यः कामायाऽऽलभत तद्यदग्निभ्य ऽइति बहूनि ह्यग्निरूपाण्यभ्यध्यायदथ यत्कामायेति कामेन ह्यालभत तानाप्प्रीतान्प्पर्य्यग्निकृतानु-

* का० श्रौ० सू० १६. १. ५ ।

दीचो नीत्वा समज्ञपयत् ॥६॥ स ऽऐक्षत । या वै * श्रीरभ्य्यधासिषमिमास्ताः शीर्षसु हन्त शीर्षाण्ण्येवोपद्धा ऽइति स शीर्षाण्ण्येवोत्कृत्त्योपाऽऽधत्ताऽथेतराणि कुसिन्धान्न्यप्प्सु प्प्राऽऽप्लावयदज़ेन यज्ञः समस्थापयन्नेन्नमे यज्ञो व्विकृष्टोऽसदित्यात्मा वै यज्ञो नेन्नमेऽयमात्मा व्विकृष्टोऽसदित्त्येतेन पशुनेष्ट्वा तत्प्रजापतिरपश्श्यद्यथैतस्याऽग्नेरन्तं न पर्य्यैत् ॥ ७ ॥ सऽऐक्षत । यमिममात्मानमप्प्सु प्प्राऽपिप्लवं तमन्न्विच्छानीति तमन्वैच्छत्तद्यदेषामप्प्सु प्प्राविद्धानां प्रत्त्यतिष्ठत्ता ऽअपः समभरदथ यदस्यां तां मृदं तदुभयꣳ सम्भृत्त्य मृदं चाऽपश्श्चेष्टकामकरोत्तस्म्मादेतदुभयमिष्टका भवति मृच्चाऽऽपश्च ॥ ८ ॥ स ऽऐक्षत । यदि वा ऽइदमित्थमेव सदात्मानमभिसंस्करिष्ष्ये मर्त्त्यः कुणपोऽनपहतपाप्प्मा भविष्ष्यामि हन्तैनदग्निना पचानीति तदग्निनाऽपचत्तदेनदमृतमकरोदेतद्वै हविरमृतं भवति यदग्निना पचन्ति तस्म्मादग्निनेष्टकाः पचन्त्यमृता ऽएवैनास्तत्कुर्व्वन्ति ॥ ९ ॥ तद्यदिष्ट्वा पशुनाऽऽपश्यत् । तस्म्मादिष्टकास्तस्म्मादिष्ट्वैव पशुनेष्टकाः कुर्य्यादनिष्टका ह ता भवन्ति याः पुरा पशोः कुर्वन्त्यथो ह तदन्न्यदेव ॥ १० ॥ तद्यास्ताः श्रियः । एतानि तानि पशुशीर्षाण्ण्यथ यानि तानि कुसिन्धान्न्येतास्ताः पञ्च चितयस्तद्यत्पशुशीर्षाण्ण्युपधाय चितीश्चिनोत्त्येतैरेव तच्छीर्षभिरेतानि कुसिन्धानि सन्दधाति ॥११॥ तऽएते सर्वे पशवो यदग्निः । तस्म्मादग्नौ पशवो रमन्ते पशु-

* 'श्रीरभ्य्यध्यासिषम्' इति पाठः 'क' पुस्तके ।

भिरेव तत्पशवो रमन्ते तस्म्माद्यस्य पशवो भवन्ति तस्मिन्न-
ग्निराधीयतेऽग्निर्ह्येष यत्पशवस्ततो वै प्प्रजापतिरग्निरभवत्
॥ १२ ॥ तद्धैक ऽआहुः । अन्नैवैतैः सर्व्वैः पशुभिर्य्यजेत यद्वा-
ऽएतैरत्र सर्व्वैः प्प्रजापतिरयक्ष्यत तदेवाऽग्नेरन्तं पर्य्यैष्यत्तद्यदे-
तैरत्र सर्व्वैर्य्यजेत तदेवाऽग्नेरन्तं परीयादिति न तथा कुर्य्या-
द्देवानां तदितादियादथो पथस्तदियादथो किं ततः सम्भ-
रेदेतानि वा ऽएतत्कुसिन्धान्न्येताश्चिच्चतीः सम्भरति तस्म्मा-
त्तथा न कुर्य्यात् ॥ १३ ॥ यद्वेवैतान्न्पशूनालभते । आयतन-
मेवैतदग्नये करोति न ह्यनायतने कश्चन रमतेऽन्नं वा-
ऽआयतनं तदेतत्पुरस्तान्निदधाति तदेनं पश्यन्नग्निरुपाऽऽव-
र्त्तते ॥ १४ ॥ पुरुषोऽश्वोगौरविरजो भवन्ति । एतावन्तो
वै सर्व्वे पशवोऽन्नं पशवस्तद्यावदन्नं तदेतत्पुरस्तान्निदधाति
तदेनं पश्यन्नग्निरुपाऽऽवर्त्तते ॥ १५ ॥ पञ्च भवन्ति । पञ्च
ह्येतेऽग्नयो यदेताश्चितयस्तेभ्य ऽएतत्पञ्चाऽऽयतनानि
निदधाति तदेनं पश्यन्नग्निरुपाऽऽवर्त्तते ॥१६॥ तद्यदग्निभ्य-
ऽइति बहवो ह्येतेऽग्नयो यदेताश्चितयोऽथ यत्कामायेति
यथा तं काममाप्नुयाद्यजमानो यत्काम ऽएतत्कर्म्म कुरुते
॥ १७ ॥ पुरुषं प्रथममालभते। पुरुषो हि प्प्रथमः पशूनाम-
थाऽश्वं पुरुषᳫं ह्यन्न्वश्वोऽथ गामश्वᳫं ह्यनु गौरथाऽविं गाᳫं
ह्यन्न्वविरथाऽजमविᳫं ह्यन्न्वजस्तदेनान्यथापूर्व्वं यथाश्रेष्ठ-
मालभते ॥ १८ ॥ तेषां विषमा रशनाः स्युः । पुरुषस्य
वर्षिष्ठाऽथ ह्रसीयस्यथ ह्रसीयसी तद्यथारूपं पशूनाᳫं रशनाः
करोत्त्यपापवस्यसाय सर्व्वास्त्वेव समाः स्युः सर्व्वाः सदृश्यः

सर्वे ह्येते समाः सर्वे सदृशा ऽअग्नयो ह्युच्यन्ते ऽन्नꣳ ह्यु- च्यन्ते तेन समास्तेन सदृशाः ॥ १९ ॥ तदाहुः । कथम- स्यैषोऽग्निः पञ्चेष्टकः सर्वः पशुष्वारब्धो भवतीति पुरोडाश- कपालेषु ह्येवाऽऽप्यत ऽइयं प्रथमा मृन्मयीष्टकाऽथ यत्प- शुमालभेत तेन पश्विष्टकाऽऽप्यतेऽथ यद्वपामभितो * हिर- ण्यशकलौ भवतस्तेन हिरण्येष्टकाऽऽप्यतेऽथ यदिध्मो यूपः परिधयस्तेन वानस्पत्येष्टकाऽऽप्यतेऽथ यदाज्यं प्रोक्ष- ण्यः पुरोडाशस्तेनाऽन्नं पञ्चमीष्टकाऽऽप्यत ऽएवमु हाऽस्यै- षोऽग्निः पञ्चेष्टकः सर्वः पशुष्वारब्धो भवति ॥ २० ॥ तेषां चतुर्विꣳशतिः सामिधेन्यः । चतुर्विꣳशत्यर्द्धमासो वै संवत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेत- त्समिन्धे ॥ २१ ॥ यद्वेव चतुर्विꣳशतिः । चतुर्विꣳशत्यक्षरा वै गायत्री गायत्रोऽग्निर्यावानग्निर्यावत्यस्य मात्रा ताव- तैवैनमेतत्समिन्धे ॥ २२ ॥ यद्वेव चतुर्विꣳशतिः । चतु- र्विꣳशो वै पुरुषो दश हस्त्या ऽअङ्गुलयो दश पाद्या- श्चत्वार्यङ्गानि पुरुषः प्रजापतिः प्रजापतिरग्निर्यावान- ग्निर्यावत्यस्य मात्रा तावतैवैनमेतत्समिन्धे ॥ २३ ॥ उभ- यीर्गायत्रीश्च त्रिष्टुभश्चाऽन्वाह । प्राणो गायत्र्यात्मा त्रिष्टुप्प्राणमेवाऽस्य गायत्रीभिः समिन्ध ऽआत्मानं त्रिष्टु- ब्भिर्मध्ये त्रिष्टुभो भवन्त्यभितो गायत्र्यो मध्ये ह्ययमात्मा- ऽभित प्राणाः भूयसीः पुरस्ताद्गायत्रीरन्वाह कनीयसीरु-

* "जुह्वामुपस्तीर्य हिरण्यशकलमवधाय कृत्स्नां वपामवदाय हिरण्यशकलमुपरिष्टा- त्कृत्वाऽभिघारयति" ( आप० श्रौ० सू० १६. १७ ) ।

परिष्टाद्भूयाᳬंसो हीमे पुरस्तात्प्राणाः कनीयाᳬंस ऽउपरिष्टात् ॥ २४ ॥ * सोऽन्वाह । 'समास्त्वाग्न ऽऋतवो वर्द्धयन्त्वि'[1]ति प्रजापतिं विस्रस्तं यत्राऽग्निः समदधात्तमब्रवीद्या मत्सम्मिताः सामिधेन्यस्ताभिर्मा समिन्त्स्वेति ॥ २५ ॥ स ऽएता ऽअपश्यत् । समास्त्वाऽग्न ऽऋतवो वर्द्धयन्त्वि'ति समाश्च त्वाऽग्न ऽऋतवश्च वर्द्धयन्त्वित्येतत् 'त्संवत्सरा ऽऋषयो यानि सत्ये'[2]ति संवत्सराश्च त्वर्षयश्च सत्यानि च वर्द्धयन्त्वित्येत'त्सं दिव्येन दीदिहि रोचनेने'त्यसौ वा ऽआदित्यो दिव्यः रोचनं तेन सन्दीदिहीत्येतत् 'द्विश्वा ऽआभाहि प्रदिशश्चतस्र' ऽइति सर्वा ऽआभाहि प्रदिशश्चतस्र ऽइत्येतत् ॥ २६ ॥ ता ऽएता ऽएकव्याख्यानाः । एतमेवाऽभि यथेऽऽतमेव संस्कुर्य्यादेतᳬं सन्दध्यादेतं जनयेत्ता ऽआग्नेय्यः प्राजापत्या यदग्निरपश्यत्तेनाऽऽग्नेय्यो यत्प्रजापतिः समैन्ध तेन प्राजापत्याः ॥२७॥ द्वादश † ऽऽप्रियः । द्वादश मासाः संवत्सरः संवत्सरोऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैनमेतदाप्रीणाति ॥ २८ ॥ यद्वेव द्वादश । द्वादशाक्षरा वै जगतीयं वै जगत्यस्याᳬं हीदᳬं सर्वं जगदियमु वा ऽअग्निरस्यै हि सर्वोऽग्निश्चीयते यावानग्निर्य्यावत्यस्य मात्रा तावतैवैनमेतदा-

---

* समिध्यमान-समिद्धवत्यन्तरेण "समास्त्वाग्न" इति नव दधाति" ( का० श्रौ० सू० १६. १. ११ ) ।

( १ ) शु० सं० अ० २७ क० १ । ( २ ) शु० सं० अ० २७ क० १ । ( ३ ) शु० सं० अ० २७ क० १ । ( ४ ) शु० सं० अ० २७ क० १ ।

† अथात आप्रियः । आप्रियः कस्मात् ? आप्नोतेः, प्रीणातेर्वा । 'अप्रीभिराप्रीणाति' इति च ब्राह्मणम् ( निरु० ८. १. ४. ) ।

प्प्रीणाति ॥ २९ ॥ यद्वेव द्वादश । द्वादशाक्षरा वै जगती जगती सर्व्वाणि च्छन्दाᳮसि सर्व्वाणि च्छन्दाᳮसि प्प्रजापतिः प्प्रजापतिरग्निरग्ग्निर्य्यावानग्ग्निर्य्यावत्त्यस्य मात्रा तावतैवैनमेतदाप्प्रीणाति ॥३०॥ ता * ऽएता 'ऽऊर्द्ध्वा ऽअस्य समिधो भवन्ती'ति । प्रजापतिं व्विस्रस्तं यत्राऽग्निः समदधात्तमब्रवीद्या मत्सम्मिता ऽआप्प्रियस्ताभिर्म्माऽऽप्प्रीणीहीति ॥ ३१ ॥ सऽएता ऽअपश्श्यत् । 'ऊर्द्ध्वा ऽअस्य समिधो भवन्ती'त्यूर्द्ध्वा ह्येतस्य समिद्धस्य समिधो भव'न्त्यूर्द्ध्वा शुक्रा शोचीᳮष्यग्नेरि'त्यूर्द्ध्वानि ह्येतस्य शुक्राणि शोचीᳮष्यर्च्चीᳮषि भवन्ति 'द्युमत्तमे'ति व्वीर्य्यवत्तमेत्येत'त्सुप्प्रतीकस्ये'ति सर्व्वतो वाऽअग्निः सुप्प्रतीकः 'सूनोरिति' यदेनं जनयति तेनाऽस्यैष सूनुः ॥ ३२ ॥ ता ऽएता ऽएकव्व्याख्यानाः । एतमेवाऽभि यथैतमेव संस्कुर्य्यादेतᳮ सन्दद्ध्यादेतं जनयेत्ता ऽआग्नेय्यः प्प्राजापत्त्या यदग्निरपश्श्यत्तेनाऽऽग्नेय्यो यत्प्रजापतिमाप्प्रीणात्तेन प्प्राजापत्त्याः ॥३३॥ ता व्विषमा व्विषमपदाः । व्विषमाक्षरा व्विषमाणि हि च्छन्दाᳮस्यथो यान्न्यस्याऽध्यात्ममङ्गानि व्विषमाणि तान्न्यस्यैताभिराप्प्रीणाति ॥ ३४ ॥ व्वैश्वानरः पशुपुरोडाशः । वैश्वानरो वै सर्व्वेऽग्नयः सर्व्वेषामग्नीनामुपाऽऽप्त्यै ॥ ३५ ॥ यद्वेव व्वैश्वानरः । ऋतवो ह्येते यदेताश्चितयोऽग्नयो वा ऽऋतव ऽऋतवः संवत्सरः संवत्सरो

* "आप्रियो द्वादशोर्ध्वा अस्येति" ( का० श्रौ० सू० १६. ३. १२ ) ।

( १ ) शु० सं० अ० २७ क० ११ । ( २ ) शु० सं० अ० २७ क० ११ । ( ३ ) शु० सं० अ० २७ क० ११ । ( ४ ) शु० सं० अ० २७ क० ११ । ( ५ ) शु० सं० अ० २७ क० ११ ।

वैश्वानरो यदग्नय ऽइति स्यादिति तद्वेचयेद् द्वादशकपालो द्वादश मासाः संवत्सरः संवत्सरो वैश्वानर ऽआग्नेय्यो याज्यानुवाक्या ऽअग्निरूपाणामुपाऽऽप्त्यै कामवत्यः कामानामुपाऽऽप्त्यै ॥३६॥ तद्धैके। इत्त्येवैतानि पशुशीर्षाणि वित्त्वोपदधत्युभयेनैते पशव ऽइति ते ह ते मर्त्याः कुणपाः सम्भवन्त्यनाप्प्रीतानि हि तानि तद्ध तथाऽऽषाढः सौश्रोमते यस्योपदधुः स ह क्षिप्प्र ऽएव ततो ममार ॥ ३७ ॥ हिरण्मयान्त्यु हैके कुर्वन्ति। अमृतेष्टका ऽइति वदन्तस्ता ह ता ऽअनृतेष्टका न हि तानि पशुशीर्षाणि ॥ ३८ ॥ मृन्मयान्त्यु हैके * कुर्वन्ति । उत्सन्ना वा ऽएते पशवो यद्वै किञ्चोत्सन्नमियं तस्य सर्वस्य प्प्रतिष्ठा तद्यत्रैते पशवो गतास्तत ऽएनानधि सम्भराम ऽइति न तथा कुर्य्याद्यो वा ऽएतेषामावृतं च ब्राह्मणं च न विद्यात्तस्यैत ऽउत्सन्नाः स्युः स ऽएतानेत्र पञ्च पशूनालभेत यावदस्य वशः स्यात्तान्हैतान्प्रजापतिः प्प्रथम ऽआलेभे श्यापर्ण्णः सायकायनोऽन्तमोऽथ ह स्मैतानेवाऽन्तरेणाऽऽलभन्तेऽथैतर्हीमौ द्वावेवाऽऽलभ्येते प्प्राजापत्यश्च वायव्यश्च तयोरतो ब्राह्मणमुच्यते ॥ ३९ ॥ (A)

द्वितीयाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

माध्यन्दिनीये शतपथब्राह्मणे प्रथमः प्रपाठकः ॥ १ ॥

कण्डिकासंख्या ॥ ११० ॥



* का० श्रौ० सू० १६. १. ३६–४१।

(A) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—का० श० ८. २. १; कठ० सं० २०. १६ १७. कपि० २९. ४. ४: मै० सं० ११. १२. ५, ६; तै० सं० ४. १. ७, ८।

[ अथ प्राजापत्यादिपश्वनुष्ठानसम्प्रदायः ]

( तत्र प्राजापत्यपशुः, वायव्यपशुः, पश्वालम्भकालः, उखासम्भरणविधिश्च )

प्राजापत्यं चरका ऽआलभन्ते । प्रजापतिरग्निं चित्वाऽग्निरभवत्तद्यदेतमालभते तदेवाऽग्नेरन्तं पर्येतीति ॥ १ ॥ श्यामो * भवति । द्वयानि वै श्यामस्य लोमानि शुक्लानि च कृष्णानि च द्वन्द्वं मिथुनं प्रजननं तदस्य प्प्राजापत्यꣳ रूपं तूपरो भवति तूपरो हि प्प्रजापतिः ॥ २ ॥ तस्यैकविꣳशतिꣳ सामिधेन्न्यः । द्वादश मासाः पञ्चर्त्तवस्त्रय ऽइमे लोका ऽअसावादित्य ऽएकविꣳश ऽएष प्प्रजापतिः प्प्रजापतिरग्निरुर्याँवानग्निर्य्यावत्यस्य मात्रा तावतैवैनमेतत्समिन्धे ॥ ३ ॥ यद्वेवैकविꣳशतिः । एकविꣳशो वै पुरुषो दश हस्त्या ऽअङ्गुलयो दश पाद्या ऽआत्मैकविꣳशः पुरुषः प्प्रजापतिः प्प्रजापतिरग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैनमेतत्समिन्धे ॥ ४ ॥ उभयीर्गायत्रीश्च त्रिष्टुभश्चाऽन्न्वाह । तासामुक्तो बन्धुरुक्तम्वेवाऽन्न्वूचꣳ † हिरण्यगर्ब्भवत्याघारमाघारयति प्प्रजापतिर्वै ‡ हिरण्यगर्ब्भः प्प्रजापतिरग्निर्द्वादशाऽप्प्रियस्तासामुक्तो बन्धुरुक्तम्वेवाऽन्न्वूचं प्राजापत्यः पशुपुरोडाशो य ऽएव पशोर्बन्धुः स पुरोडाशस्य द्वादशकपालो द्वादशमासाः संवत्सरः संवत्सरः प्प्रजापतिः कद्वत्यो याज्ज्यानुवाक्याः को हि प्प्रजापतिः ॥ ५ ॥ अथैतं वायवे नियुत्वते । शुक्लं तूपरमालभते प्प्रजापतिः

* का० श्रौ० सू० १६. १. ३३ ।

† का० श्रौ० सू० १६. १. ३५, ३७ ।

‡ तै० सं० १. ७. ६,६ ।

प्प्रजाः सृष्ट्वाऽनुऽव्यैक्षत तस्याऽत्यानन्देन रेतः परापतत्सोऽजः शुक्लस्तूपरो लप्प्सुघ्यभवद्रसो वै रेतो या वाऽनु वै रसस्तावानात्मा तद्यदेतमालभते तदेवाऽग्नेरन्तं पर्य्येति शुक्लो भवति शुक्लꣳ हि रेतस्तूपरो भवति तूपरꣳ हि रेतो वायवे भवति प्प्राणो वै वायुर्न्नियुत्वते भवत्युदानो वै नियुतः प्प्राणोदानावेवाऽस्मिन्नेतद्दधाति ॥ ६ ॥ यद्वेवैतं वायवे नियुत्वते। शुक्लं तूपरमालभते प्प्रजापतिं विस्रस्तं यत्र देवाः समस्कुर्वंस्स योऽस्म्मात्प्राणो मध्यत ऽउदक्रामत्तमस्मिन्नेतेन पशुनाऽऽदधुस्तथैवाऽस्मिन्नयमेतद्दधाति वायवे भवति प्प्राणो वै वायुर्न्नियुत्वते भवत्युदानो वै नियुतः प्प्राणोदानावेवाऽस्मिन्नेतद्दधाति शुक्लो भवति शुक्लो हि वायुस्तूपरो भवति तूपरो हि वायुः ॥ ७ ॥ तस्य सप्तदश सामिधेन्न्यः। सप्तदशो वै संवत्सरो द्वादशमासाः पञ्चऽर्त्तवः संवत्सरः प्प्रजापतिः प्प्रजापतिरग्निरर्य्यावानग्निरर्य्यावत्यस्य मात्रा तावतैवैनमेतत्समिन्धे ॥ ८ ॥ यद्वेव सप्तदश। सप्तदशो वै पुरुषो दश प्प्राणाश्च्चत्वार्य्यङ्गान्न्यात्मा पञ्चदशो ग्रीवाः षोडश्श्यः शिरः सप्तदशं पुरुषः प्प्रजापतिः प्प्रजापतिरग्निरर्य्यावानग्निरर्य्यावत्यस्य मात्रा तावतैवैनमेतत्समिन्धे ॥ ९ ॥ उभयीर्ग्गायत्रीश्च्च त्रिष्टुभश्च्चाऽन्न्वाह। तासामुक्तो बन्धुरुक्तम्वेवाऽन्वृचं द्वादशाऽऽप्प्रियस्तासामुक्तो बन्धुरुक्तम्वेवाऽन्वृचं * प्राजापत्यः पशुपुरोडाशोऽत्रो स काम ऽउपाऽऽसऽइति ह स्म्माऽऽह माहित्थिरर्य्यं चरकाः प्प्राजापत्ये पशा-

* का० श्रौ० सू० १६. १. ३९।

वाहुरिति ॥ १०॥ यद्येव वायव्यः पशुर्भवति । प्राजापत्यः पशुपुरोडाशोऽर्द्धᳬ ह प्रजापतेर्वायुरर्द्धं प्रजापतिस्तद्यदुभौ वायव्यौ स्यातामुभौ वा प्राजापत्यावर्द्धᳬ हैवाऽस्य कृतᳬ स्यान्नार्द्धमथ यद्वायव्यः पशुर्भवति प्राजापत्यः पशुपुरोडाशस्तेन हैवैतᳬ सर्वं कृत्स्नं प्रजापतिᳬ संस्करोति ॥ ११ ॥ यद्वेव वायव्यः पशुर्भवति । प्राजापत्यः पशुपुरोडाशः प्रजापतिं विस्रस्तं यत्र देवाः समस्कुर्वन्त्स यो ऽस्मात्प्राणो मध्यत ऽउदक्रामत्तमस्मिन्नेतेन पशुनाऽऽदधुरथाऽस्यैतेन पुरोडाशेनाऽऽत्मानᳬ समस्कुर्वन्त्स यत्प्राजापत्यो भवति प्रजापतिर्ह्यात्मा द्वादशकपालो द्वादश मासाः संवत्सरः संवत्सरः प्रजापतिः कद्वत्यौ याज्यानुवाक्ये को हि प्रजापतिः ॥१२॥ तद्यद्वपां* पुरस्ताज्जुहोति । य ऽएवाऽयं पुरस्तात्प्राणस्तमस्मिन्नेतद्दधात्यथ यदेतेन मध्यतश्चरन्ति मध्यतो ह्ययमात्माऽथ यद्धविषोपरिष्टाच्चरन्ति य ऽएवाऽयमुपरिष्टात्प्राणस्तमस्मिन्नेतद्दधाति शुक्रवत्यो याज्यानुवाक्याः स्युः शुक्ररूपाणामुपाऽऽप्त्यै नियुत्वत्यो यदेव नियुत्वद्रूपं तस्योपाऽऽप्त्यै ॥ १३ ॥ तदु वा ऽआहुः । वपाया ऽएव शुक्रवत्यौ स्यातामेतावद्वै पशौ शुक्रं यद्वपा शुक्रवत्यौ नियुत्वत्यौ हविषो यदेव नियुत्वद्रूपं तस्योपाऽऽप्त्या ऽइति ॥ १४ ॥ यद्वेवैतं पशुमालभते । एतस्मिन्ह पशौ सर्वेषां पशूनाᳬ रूपं यत्तूपरो लप्सुदी तत्पुरुषस्य रूपं तूपरो हि लप्सुदी पुरुषो यत्तूपरः केसरवाँस्तदश्वस्य रूपं तूपरो हि केसरवा-

* कद्वत्यो याज्यानुवाक्याः प्राजापत्यस्य ( का० श्रौ० सू० १६. १. ४०-४३ ) ।

नश्वो यदष्टाशफस्तद्गोरूपमष्टाशफो हि गौरथ यदस्याऽवे-
रिव शफास्तदु वे रूपं स्यदजस्तदजस्य तद्यदेतमालभते तेन
हैवाऽस्यैते सर्व्वे पशव ऽआलब्धा भवन्त्यतो यतमदस्य
कर्म्मोपकल्पेतै ते वा पञ्चपशव ऽएष वा प्प्राजापत्य ऽएष वा
नियुत्वतीयः ॥ १५ ॥ तं * पौर्ण्णमास्यामालभेत । अमावा-
स्यायामालभेतेत्यु हैक ऽआहुरसौ वै चन्द्रः प्प्रजापतिः
स ऽएताᳫं रात्रिमिह वसति तद्यथोपतिष्ठन्तमालभेतैवं
तदिति ॥ १६ ॥ तद्वै पौर्ण्णमास्यामेव । असौ वै चन्द्रः
पशुस्तं देवाः पौर्ण्णमास्यामालभन्ते यत्रैनं देवा ऽआलभन्ते
तदेनमालभा ऽइति तस्मात्पौर्ण्णमास्यां यद्वेव पौर्ण्णमास्यां
पौर्ण्णमासी ह वाऽव प्प्रथमा व्युवास तस्माद्वेव पौर्ण्णमा-
स्याम् ॥ १७ ॥ तद्वै फाल्गुन्यामेव । एषा ह संवत्सरस्य
प्प्रथमा रात्रिर्य्यत्फाल्गुनी पौर्ण्णमासी योत्तरैषोत्तमा या पूर्व्वा
मुखत ऽएव तत्संवत्सरमारभते ॥ १८ ॥ स वा ऽइष्ट्वैव
पौर्ण्णमासेन । अथ पशुमालभते पौर्ण्णमासेन वा ऽइन्द्रो वृत्रं
पाप्मानᳫं हत्वाऽपहतपाप्मैतत्कर्म्माऽऽरभत तथैवैतद्यज-
मानः पौर्ण्णमासेनैव वृत्रं पाप्मानᳫं हत्वाऽपहतपाप्मैतत्क
र्म्माऽऽरभते ॥ १९ ॥ तद्वा † ऽउपाᳫंशु भवति । एतद्वैतैः
प्प्रजापतिः पशुभिः कर्म्मैयेष तद्वाऽत्राऽनद्धेवैवासाऽनिरुक्त-
मिव तस्मादुपाᳫंशुः ॥ २० ॥ यद्वेवोपाᳫंशु । प्प्राजापत्यं
वा ऽएतत्कर्म्म प्प्रजापतिᳫं ह्येतेन कर्म्मणाऽऽरभतेऽनिरुक्तो

* का० श्रौ० सू० १६. १. ५–७ ।
† का० श्रौ० सू० १६. १. २५, २६ ।

वै प्प्रजापतिः ॥ २१ ॥ यद्वेवोपाᳪंशु । रेतो वा ऽअत्र यज्ञ ऽउपाᳪंशु वै रेतः सिच्च्यते व्वपा पशुपुरोडाशो हविरेतावान्न्हि पशुः ॥२२॥ अष्टकायामुखाᳪं * सम्भरति। प्राजापत्त्यमेतदहर्य्यदष्टका प्प्राजापत्त्यमेतत्कर्म्म यदुखा प्प्राजापत्त्य ऽएव तदहन्न्प्राजापत्त्यं कर्म्म करोति ॥ २३ ॥ यद्वेवाऽष्टकायाम् । पर्व्वैतत्संवत्सरस्य यदष्टका पर्व्वैतदग्नेर्य्यदुखा पर्व्वण्ण्येव तत्पर्व्व करोति ॥ २४ ॥ यद्वेवाऽष्टकायाम् । अष्टका व्वा ऽउखा निधिर्द्वा ऽउद्धी तिरश्ची † रास्ना तच्चतुश्चतस्र ऽऊर्द्ध्वास्तदष्टावष्टकायामेव तदष्टकां करोति ॥ २५ ॥ ‡ अमावास्यायां दीक्षते । अमावास्यायै वा ऽअधि यज्ञस्तायते यतो यज्ञस्तायते ततो यज्ञं जनयानीति ॥ २६ ॥ यद्वेवाऽमावास्यायाᳪं । रेतो व्वा ऽएतद् भूतमात्मानᳪं सिञ्चत्युखायां य्योनौ यद्दीक्षते तस्म्मा ऽएतं पुरस्ताल्लोकं करोति यद्दीक्षितो भवति तं कृतं लोकमभिजायते तस्म्मादाहुः कृतं लोकपुरुषोऽभि जायत ऽइति ॥ २७ ॥ स यत्कनीयः संव्वत्सराद्दीक्षितः स्यात् । अलोका ऽइष्टकाऽउपदद्ध्यादिष्ट्टका लोकानतिरिच्च्येरन्नथ यद्भूयसो लोकान्न्कृत्त्वेष्टका नाऽनूपदद्ध्याल्लोका ऽइष्ट्टका ऽअतिरिच्च्येरन्नथ यदमावास्यायां दीक्षित्वाऽमावास्यायां क्रीणाति तद्यावन्तमेव लोकं करोति तावतीरिष्टका ऽउपदधात्यथाऽस्याऽऽपूर्य्यमाणपक्षे सर्व्वोऽग्निश्चीयते ॥ २८ ॥

* का० श्रौ० सू० १६. २. १ ।

† का० श्रौ० सू० १६. ३. ३१ ।

‡ अत्र शतम् ३५००; का० श्रौ० सू० १६. ४. २७ ।

तदाहुः । यद्यावत्य ऽएतस्याऽग्नेरिष्टकास्तावन्ति क्रुयेऽ-होरात्राणि सम्पद्यन्तेऽथ यान्न्यूर्द्धानि क्वयादहानि कथम-स्यते लोका ऽअनूपहिता भवन्तीति यद्वा ऽअमावास्यायां दीक्षित्वाऽमावास्यायां क्रीणाति तद्यावन्तमेव लोकं करोति तावतीरिष्टका ऽउपदधात्यथ यान्न्यूर्द्धानि क्वयादहानि तस्मिन्नवकाशेऽद्धर्युरग्निं चिनोति क्वो हि चिनुयान्न च सोऽवकाशः स्याद्यावन्ति वै संवत्सरस्याऽहोरात्राणि तावत्य-ऽएतस्याऽग्नेरिष्टका ऽउप च त्रयोदशो मासस्त्रयोदशो वा ऽएष मासो यान्न्यूर्द्धानि क्वयादहानि तद्या ऽअमूस्त्र-योदशस्य मास ऽइष्टकास्ताभिरस्य ते लोका ऽअनूपहिता भवन्ति तत्समा लोकाश्चेष्टकाश्च भवन्ति ॥ २९ ॥ एतद्वै सैव प्प्रथमा पौर्णमासी । तस्यां पशुमालभते या प्प्रथमाऽष्टका तस्यामुखाᳬं सम्भरति या प्प्रथमाऽमावास्या तस्यां दीक्षत ऽएतद्वै यान्न्येव संवत्सरस्य प्प्रथमान्न्यहानि तान्न्यस्य तदारभते तानि च तदाप्नोत्यथाऽतः सम्पदेव ॥ ३० ॥ तदाहुः । कथमस्यैतत्कर्म्म संवत्सरमग्निमाप्नोति कथᳬं संवत्सरेणाऽग्निना सम्पद्यत ऽइत्येतेषां वै पश्वानां पशूनां चतुर्विᳬंशतिः सामिधेन्न्यो द्वादशाऽऽप्प्रियस्तत्षट्त्रिᳬं-शदेकादशाऽनुयाजा * ऽएकादशोपयजस्तदष्टा पञ्चाशत् ॥३१॥ ततो याऽष्टाचत्त्वारिᳬंशत् । साऽष्टाचत्त्वारिᳬंशदक्षरा जगतीयं वै जगत्यस्याᳬं हीदᳬं सर्व्वं जगदियमु वा ऽअग्निर-स्यै हि सर्व्वोऽग्निश्चीयते यावानग्निर्य्यावत्यस्य मात्रा तावत्तद्

* आप० श्रौ० सू० ७, २७, ११ ।

भवति ॥ ३२ ॥ यद्वेवाऽष्टाचत्त्वारिꣳशत् । अष्टाचत्त्वारिꣳशदक्षरा वै जगती जगती सर्व्वाणि च्छन्दाꣳसि सर्व्वाणिच्छन्दाꣳसि प्प्रजापतिः प्प्रजापतिरग्निरुर्यावानग्निरुर्यावित्त्यस्य मात्रा तावत्तद् भवति ॥ ३३ ॥ अथ यानि दश । सा दशाक्षरा व्विराड्विराडग्निर्द्दश दिशो दिशोऽग्निर्द्दश प्प्राणाः प्प्राणा ऽअग्निरुर्यावानग्निरुर्यावित्त्यस्य मात्रा तावत्तद् भवति ॥ ३४ ॥ व्वपा पशुपुरोडाशः । तत्षष्टिः षष्टिम्मासस्याऽहोरात्राणि तन्मासमाप्नोति मास ऽआप्त- ऽऋतुमाप्नोत्यृतुः संवत्सरं तत्संवत्सरमग्निमाप्नोति ये च संवत्सरे कामा ऽअथ यदतोऽन्न्यद्यदेव संवत्सरेऽन्नं तत्तत् ॥ ३५ ॥ अथैतस्य प्प्राजापत्त्यस्य । एकविꣳशतिः सामिधेन्न्यो द्वादशाऽऽप्प्रियस्तत्त्रयस्त्रिꣳशदेकादशाऽनुयाजा- ऽएकादशोपयज तत्पञ्च पञ्चाशद्वपा पशुपुरोडाशो हविस्तदष्टापञ्चाशत्स योऽष्टापञ्चाशति कामोऽत्रैव तमाप्नोति द्वावाघारौ तत्षष्टिः स यः षष्ट्यां कामोऽत्रैव तमाप्नोत्त्यथ यदतोन्न्यद्यदेव संवत्सरेऽन्नं तत्तत् ॥ ३६ ॥ अथैतस्य नियुत्त्वतीयस्य । सप्तदश सामिधेन्न्यो द्वादशाऽऽप्प्रियस्तदेकां न त्रिꣳशदेकादशानुयाजा ऽएकादशोपयजस्तदेक- पञ्चाशद्वपा पशुपुरोडाशो हविस्तच्चतुष्पञ्चाशद् द्वावाघारौ द्वौ स्विष्टकृतौ तदष्टापञ्चाशत्स योऽष्टापञ्चाशति कामोऽत्रैव तमाप्नोति व्वनस्प्पतिश्च व्वसाहोमश्च तत्षष्टिः स यः षष्ट्यां कामोऽत्रैव तमाप्नोत्त्यथ यदतोऽन्न्यद्यदेव संवत्सरेऽन्नं तत्तदेवमु हाऽस्यैतत्कर्म्म संवत्सरमग्निमाप्नो-

ऽयेवꣳ संवत्सरेणाऽग्निना सम्पद्यते ॥ ३७ ॥ तदाहुः । नैतस्य पशोः समिष्टयजूꣳषि जुहुयान्न हृदयशूलेनाऽव-भृथमभ्यवेयादारम्भो वा ऽएषोऽग्नेः पशुर्व्यवसर्गो देव-तानाꣳ समिष्टयजूꣳषि सꣳस्थाऽवभृथो नेदारम्भे देवता ऽव्यवसृजानि नेद्यज्ञꣳ सꣳस्थापयानीति स वै समेव स्थापयेदेतेन पशुनेष्ट्वा तत्प्रजापतिरपश्यद्यथैतस्याऽग्नेरन्तं न पर्यैत्तस्मात्सꣳस्थापयेद्यद्वेव सꣳस्थापयति प्राण ऽएष पशुस्तस्य यदन्तरियात्प्राणस्य तदन्तरियाद्यदु वै प्राणस्या-ऽन्तरियात्तत ऽएवं म्रियेत तस्मात्समेव स्थापयेदथाऽतो व्रतानामेव ॥ ३८ ॥ तदाहुः । नैतेन पशुनेष्ट्वोपरि शयीत* न माꣳसमश्नीयान्न मिथुनमुपेयात्पूर्वदीक्षा वा ऽएष पशुरनवक्लृप्तं वै तद्यदीक्षित ऽउपरि शयीत यन्माꣳसम-श्नीयाद्यन्मिथुनमुपेयादिति नेत्त्वेवैषा † दीक्षा नेव हि मेखलाऽस्ति न कृष्णाजिनमिष्टकां वा ऽएतां कुरुते तस्मादु काममेवोपरि शयीतैतदु सर्वमन्नं यदेते पश-वस्तदस्याऽत्राऽऽसमारब्धं भवति तद्यानि कानि चाऽमधुनो-ऽशनानि तेषामस्य सर्वेषां कामाशनं यदि लभेत मिथुनं तु नोपेयात्पुरा मैत्रावरुण्यै पयस्यायै तस्योपरि बन्धुः ॥ ३९ ॥ तदाहुः । दद्यादेतस्मिन्यज्ञे दक्षिणां नेन्मेऽयं यज्ञोऽदक्षिणोऽसद् ब्रह्मण ऽआदिष्टदक्षिणां दद्याद् ब्रह्मा वै सर्वो यज्ञस्तदस्य सर्वो यज्ञो भिषज्जयितो भवतीति न

* "मैथुनं वर्जयेदापयस्यायाः, मांसोपर्यासने चेच्छन्" (का० श्रौ० सू० १६.१.८,९) ।

† 'मेखलया दीक्षयति' 'कृष्णाजिनेन दीक्षयति' इति दीक्षाविधानादत्रोभयोरभावादियं दीक्षा न भवतीति ( तै० सं० ६. १. ३. १४४ ) स्पष्टम् ।

तथा कुर्य्यादिष्टकां व्वा ऽएतां कुरुते तद्यथेष्टकामिष्टकायां दद्यात्तादृक्तदमुर्ह्येव दद्याद्यदस्योपकल्पेत ॥४०॥ (B)

द्वितीयाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥



[ चितीनामृषिदेवतासम्बन्धेनोत्पत्तिप्रकारः ]

एतद्वै देवा ऽअब्रुवन् । चेतयध्वमिति चितिमिच्छतेति वाऽव तदब्रुवँस्तेषां चेतयमानानां प्रजापतिरिमां प्रथमाᳯं स्वयमातृण्णां चितिमपश्यत्तस्मात्तां प्रजापतिनोपदधाति ॥ १ ॥ तमग्निरब्रवीत् । उपाऽहमायानीति केनेति पशुभिरिति तथेति पश्विष्टकया ह तदुवाचैषा वाऽव पश्विष्टका यद्दूर्वेष्टका तस्मात्प्रथमायै स्वयमातृण्णाया ऽअनन्तर्हिता दूर्वेष्टकोपधीयते तस्मादस्या ऽअनन्तर्हिता ऽओषधयोऽनन्तर्हिताः पशवोऽनन्तर्हितोऽग्निरनन्तर्हितो ह्येष ऽएतयोपैत् ॥ २ ॥ तेऽब्रुवन् । चेतयध्वमेवेति चितिमिच्छतेति वाऽव तदब्रुवन्नित ऽऊर्ध्वमिच्छतेति तेषां चेतयमानानामिन्द्राग्नी च विश्वकर्म्मा चाऽन्तरिक्षं द्वितीयाᳯं स्वयमातृण्णां चितिमपश्यँस्तस्मात्तामिन्द्राग्निभ्यां च विश्वकर्म्मणा चोपदधाति ॥ ३ ॥ तान्वायुरब्रवीत् । उपाऽहमायानीति केनेति दिग्भिरिति तथेति दिश्याभिर्ह तदुवाच तस्माद् द्वितीयायै स्वयमातृण्णाया ऽअनन्तर्हिता दिश्या-ऽउपधीयन्ते तस्मादन्तरिक्षादनन्तर्हिता दिशोऽनन्तर्हितो

(B) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ८. २. २ ।

वायुरनन्तर्हितो ह्येष एताभिरुपैत् ॥ ४ ॥ तेऽब्रुवन् । चेतयध्वमेवेति चितिमिच्छतेति वाऽव तदब्रुवन्नित ऽऊर्ध्वमिच्छतेति तेषां चेतयमानानां परमेष्ठी दिवं तृतीयाᳪ स्वयमातृण्णां चितिमपश्यत्तस्मात्तां परमेष्ठिनोपदधाति ॥ ५ ॥ तमसावादित्योऽब्रवीत् । उपाऽहमायानीति केनेति लोकम्पृणयेति तथेत्येष वाऽव लोकम्पृणाऽऽत्मना हैव तदुवाच तस्मात्तृतीया स्वयमातृण्णानन्तर्हितालोकम्पृणाया ऽउपधीयते तस्मादसावादित्योऽनन्तर्हितो दिवोऽनन्तर्हितो ह्येष ऽएतयोपैत् ॥ ६ ॥ तदेता वाऽव षड् देवताः । इदᳬ सर्वमभवन्यदिदं किञ्च ते देवाश्चर्षयश्चाऽब्रुवन्निमा वाऽव षड् देवता ऽइदᳬ सर्वमभूम्नुप तज्जानीत यथा वयमिहाऽप्यसामेति तेऽब्रुवँश्चेतयध्वमिति चितिमिच्छतेति वाऽव तदब्रुवँस्तदिच्छत यथा वयमिहाऽप्यसामेति तेषां चेतयमानानां देवा द्वितीयां चितिमपश्यन्नृषयश्चतुर्थीम् ॥ ७ ॥ तेऽब्रुवन् । उप वयमायामेति केनेति यदेषु लोकेषूपेति तथेति तद्यदूर्ध्वं पृथिव्या ऽअर्वाचीनमन्तरिक्षात्तेन देवा ऽउपाऽयँस्तदेषा द्वितीया चितिरथ यदूर्ध्वमन्तरिक्षादर्वाचीनं दिवस्तेनर्षय ऽउपायँस्तदेषा चतुर्थी चितिः ॥ ८ ॥ ते यदब्रुवन् । चेतयध्वमिति चितिमिच्छतेति वाऽव तदब्रुवन्यच्चेतयमाना ऽअपश्यँस्तस्माच्चितयः ॥ ९ ॥ प्रजापतिः प्रथमां चितिमपश्यत् । प्रजापतिरेव तस्याऽआर्षेयं देवा द्वितीयां चितिमपश्यन्देवा ऽएव तस्याऽआर्षेयमिन्द्राग्नी च विश्वकर्मा च तृतीयां चितिमपश्यँस्त-

ऽएव तस्या ऽआर्षेयमृषयश्चतुर्थीं चितिमपश्यन्नृषय ऽएव तस्या ऽआर्षेयं परमेष्ठी पञ्चमीं चितिमपश्यत्परमेष्ठ्येव तस्या ऽआर्षेयꣳ स यो हैतदेवं चितीनामार्षेयं वेदाऽऽर्षेयवत्यो हाऽस्य बन्धुमत्यश्चितयो भवन्ति ॥ १० ॥ (C)

द्वितीयाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

इति द्वितीयोऽध्यायः ॥ २ ॥



[ सावित्रहोमः ]

एतद्वै देवा ऽअब्रुवन् । चेतयध्वमिति चितिमिच्छतेति वाऽव तदब्रुवँस्तेषां चेतयमानानाꣳ सवितैतानि सावित्राण्यपश्यद्यत्सविताऽपश्यत्तस्मात्सावित्राणि स ऽएता मष्टागृहीतामाहुतिमजुहोत्ताꣳ हुत्वेमामष्टधाविहितामषाढामपश्यत्पुरैव सृष्टाꣳ सतीम् ॥१॥ ते यदब्रुवन् । चेतयध्वमिति चितिमिच्छतेति वाऽव तदब्रुवन्न्यच्चेतयमाना ऽअपश्यँस्तस्माच्चितिराहुतिर्वै यज्ञो यदिष्ट्वाऽपश्यत्तस्मादिष्टका ॥२॥ [अर्धप्रपाठकः ५२ ॥] तां वा ऽएताम् । एकाꣳ * सतीमष्टागृहीतामष्टाभिर्यजुर्भिर्जुहोति तस्मादियमेका सत्यष्टधा विहिता ॥ ३ ॥ तामूर्ध्वामुद्गृह्णन् जुहोति । इमाꣳ तदूर्ध्वाꣳ रूपैरुद्गृह्णाति तस्मादियमूर्ध्वा रूपैः ॥४॥ ताꣳ सन्ततां जुहोति । एतद्वै देवा ऽअबिभयुर्यद्वैन ऽइह रक्षाꣳसि नाष्ट्रा

(C) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ८. २. ३ ।

* "यजुरष्टमाभिर्ऋग्भिरेकामाहुतिं जुहोति" ( आप० श्रौ० सू० १६. १. ४ ) ।

नाऽन्ववेयुरिति त ऽएतᳪं सन्ततहोममपश्यन् रक्षसां नाष्ट्राणामनन्ववायनाय तस्मात्सन्ततां जुहोति ॥५॥ यद्वे-वैतामाहुतिं जुहोति । सवितैषोऽग्निस्तमेतयाऽऽहुत्या पुर-स्तात्प्रीणाति तमिष्ट्वा प्प्रीत्वाऽथैनᳪं सम्भरति तद्यदेतया सवितारं प्रीणाति तस्मात्सावित्राणि तस्माद्वा ऽएता-माहुतिं जुहोति ॥ ६ ॥ यद्वेवैतामाहुतिं जुहोति । सवि-तैषोऽग्निस्तमेतयाऽऽहुत्या पुरस्ताद्रेतो भूतᳪं सिञ्चति यादृग्वै योनौ रेतः सिच्यते तादृग्जायते तद्यदेतया सवितारᳪं रेतो भूतᳪं सिञ्चति तस्मात्सावित्राणि तस्माद्वा ऽएतामाहुतिं जुहोति ॥ ७ ॥ स्रुवश्चाऽत्र स्रुक्च प्प्रयुज्येते । वाग्वै स्रुक्प्राणः स्रुवो वाचा च वै प्प्राणेन चैतदग्रे देवाः कर्म्माऽन्वैच्छँस्तस्मात्स्रुवश्च स्रुक्च ॥ ८ ॥ यद्वेव स्रुवश्च स्रुक्च । यो वै स प्प्रजापतिरासीदेष स स्रुवः प्प्राणो वै स्रुवः प्प्राणः प्प्रजापतिरथ या सा वागासीदेषा सा स्रुग्योषा वै वाग्योषा स्रुगथ यास्ता ऽआप-ऽआयन्वाचो लोकादेतास्ता यामेतामाहुतिं जुहोति ॥ ९ ॥ ताᳪं सन्ततां जुहोति । सन्तता हि ता ऽआप ऽआयन्नथ यः स प्प्रजापतिस्त्रय्या विद्यया सहाऽपः प्प्राऽऽविशदेष स यैरेतद्यजुर्भिर्ज्जुहोति ॥ १० ॥ तद्यानि त्रीणि प्प्रथमानि । इमे ते लोका ऽअथ यच्चतुर्थं यजुस्त्रयी सा विद्या जगती सा भवति जगती सर्वाणि च्छन्दाᳪंसि सर्वाणि च्छन्दाᳪंसि त्रयी विद्याऽथ यानि चत्वार्युत्तमानि दिश-स्तानीमे च वै लोका दिशश्च प्प्रजापतिरथैषा त्रयी

विया ॥ ११ ॥ स * जुहोति । 'युञ्जानः[1] प्रथमं मन' इति प्रजापतिर्वै युञ्जानः स मन एतस्मै कर्म्मणेऽयुङ्क्त तद्यन्मन एतस्मै कर्म्मणेऽयुङ्क्त तस्मात्प्रजापतिर्युञ्जानः ॥ १२ ॥ 'तत्त्वाय[2] सविता धिय' इति । मनो वै सविता प्राणा धियो 'ऽग्नेर्ज्योतिर्निचाय्ये'[3]त्यग्नेर्ज्योतिर्दृष्ट्वेत्येत'त्पृथिव्या[4] ऽअध्याभरादि'ति पृथिव्यै ह्येनदध्याभरति ॥ १३ ॥ 'युक्तेन मनसा[5] वयमि'ति । मन एवैतदेतस्मै कर्म्मणे युङ्क्ते न ह्ययुक्तेन मनसा किञ्चन सम्प्रति शक्नोति कर्त्तुं 'देवस्य[6] सवितुः सव' इति देवेन सवित्रा प्रसूता इत्येत'त्स्वर्ग्याय[7] शक्त्येति' यथैतेन कर्म्मणा स्वर्गं लोकमियादेवमेतदाह शक्त्येति शक्त्या हि स्वर्गं लोकमेति ॥ १४ ॥ 'युक्त्वाय[8] सविता देवानि'ति । मनो वै सविता प्राणा देवाः 'स्वर्यतो धिया[9] दिवमि'ति स्वर्गं ह्येनां लोकं यतो धियैतस्मै कर्म्मणे युयुजे 'बृहज्ज्योतिः[10]

---

* चयनं चिकीर्षन् फाल्गुनकृष्णप्रतिपदि पौर्णमासेष्टिं सम्पाद्य पुरुषाश्वगोऽव्यजानालभ्याज्ञेन यागं विधाय पुरुषादि-पञ्चपशूनां शिरांसि घृतेनाऽभ्यज्य प्रथमचित्याद्युपधानार्थं क्वचित् संस्थाप्य तेषां कबन्धान्यजशेषं च मृद्युक्ते तडागादिजले प्रक्षिपेत् । उखानिर्माणार्थं इष्टकानिर्माणार्थं च मृदं जलं तत एवाऽऽदेयम् । ततः फाल्गुनकृष्णाष्टम्यामुखानिर्माणम् । तदर्थमाहवनीयदक्षिणाग्नी उद्धृत्याऽऽहवनीयात्प्राक् कृते चतुष्कोणे गर्त्ते ततस्तडागान्मृत्पिण्डमानीय भूसमं स्थापयेत् । पिण्डाहवनीयान्तराले सच्छिद्रां वल्मीकमृदं निदध्यात् । आहवनीयाद्दक्षिणप्रान्तेऽश्वगर्दभाजाः प्राङ्मुखाः प्रागपराः मुञ्जरसनाबद्धा स्थाप्याः । आहवनीयोत्तरे वैणव्युभयतस्तीक्ष्णा कल्माषी हिरण्मयी वाऽभ्रिः स्थाप्या । ततः '**अष्टागृहीतं जुहोति सन्ततमुद्गृह्णन् युञ्जान इति**' ( म॰ भा॰ का॰ श्रौ॰ सू॰ १६. २. ७ ) ।

( १ ) शु॰ सं॰ अ॰ ११ क॰ १ । ( २ ) शु॰ सं॰ अ॰ ११ क॰ १ । ( ३ ) शु॰ सं॰ अ॰ ११ क॰ १ । ( ४ ) शु॰ सं॰ अ॰ ११ क॰ १ । ( ५ ) शु॰ सं॰ अ॰ ११ क॰ २ । ( ६ ) शु॰ सं॰ अ॰ ११ क॰ २ । ( ७ ) शु॰ सं॰ अ॰ ११ क॰ २ । ( ८ ) शु॰ सं॰ अ॰ ११ क॰ ३ । ( ९ ) शु॰ सं॰ अ॰ ११ क॰ ३ । ( १० ) शु॰ सं॰ अ॰ ११ क॰ ३ ।

करिष्यत' ऽइत्यसौ वा ऽआदित्यो बृहज्ज्योतिरेष ऽउ-
ऽएषोऽग्निरेतम्वेते संस्करिष्यन्तो भवन्ति 'सविता[1] प्प्रसुवाति
तानि'ति सवितृप्प्रसूता ऽएतत्कर्म्म करवन्नित्त्येतत् ॥ १५ ॥
'युञ्जते[2] मन ऽउत युञ्जते धिय' ऽइति । मनश्चैवैतत्प्राणां-
श्चैतस्म्मै कर्म्मणे युङ्क्ते 'व्विप्रा[3] व्विप्रस्ये'ति प्रजापतिर्वै
व्विप्रो देवा व्विप्रा 'बृहतो[4] विपश्चित' ऽइति प्प्रजापतिर्वै
बृहन्विपश्चि'द्धि होत्रा[5] दध' ऽइति यद्वा ऽएष चीयते
तदेष होत्रा व्विधत्ते चिते ह्येतस्मिन् होत्रा ऽअधिविधीयन्ते
'व्वयुना[6]विदि'त्येष हीदं व्वयुनमविन्द'देक ऽइदि[7]'त्येको ह्येष-
ऽइदꣳ सर्वं[8] व्वयुनमविन्द'न्मही देवस्य सवितुः परिष्टुति-
रि'ति महती देवस्य सवितुः परिष्टुतिरित्त्येतत् ॥ १६ ॥
'युजे वां ब्रह्म पूर्व्यं[9] नमोभिरि'ति । प्राणो वै ब्रह्म पूर्व्य-
मन्नं नमस्तत्तदेषैवाऽऽहुतिरन्नमेतयैव तदाहुत्यै तेनाऽन्नेन
प्प्राणानेतस्मै कर्म्मणे युङ्क्ते 'विश्लोक[10] ऽएतु पथ्येव
सूरेरि'ति यथोभयेषु देवमनुष्येषु कीर्त्तिश्लोको यजमानस्य
स्यादेवमेतदाह 'शृण्वन्तु[11] व्विश्वे ऽअमृतस्य पुत्रा' ऽइति
प्प्रजापतिर्वा ऽअमृतस्तस्य व्विश्वे देवाः पुत्रा 'ऽआये धामानि[12]
दिव्व्यानि तस्थुरि'तीमे वै लोका दिव्व्यानि धामानि
तद्य ऽएषु लोकेषु देवास्तानेतदाह ॥ १७ ॥ 'यस्य[13] प्प्रयाण-

(१) शु० सं० अ० ११ क० ३ । (२) शु० सं० अ० ११ क० ४ । (३) शु० सं० अ० ११ क० ४ । (४) शु० सं० अ० ११ क० ४ । (५) शु० सं० अ० ११ क० ४ । (६) शु० सं० अ० ११ क० ४ । (७) शु० सं० अ० ११ क० ४ । (८) शु० सं० अ० ११ क० ४ । (९) शु० सं० अ० ११ क० ५ । (१०) शु० सं० अ० ११ क० ५ । (११) शु० सं० अ० ११ क० ५ । (१२) शु० सं० अ० ११ क० ५ । (१३) शु०

मन्वन्न्य ऽइद्ययुरि'ति । प्रजापतिर्व्वा ऽएतदग्रे कर्म्माऽकरोत्त-
त्ततो देवा ऽअकुर्व'[1]न्देवा देवस्य महिमानमोजसे'ति यज्ञो वै
महिमा देवा देवस्य यज्ञं व्वीर्य्यमोजसेत्त्येत'[2]द्यः पार्थि-
वानि व्विममे स ऽएतश' ऽइति यद्वै किञ्चाऽस्यां तत्पार्थिवं
तदेष सर्व्वं व्विमिमीते रश्मिभिर्ह्येनदभ्यवतनोति '[3]रजाᳬसि
देवः सविता महित्त्वने'तीमे वै लोका रजाᳬस्यसावादित्त्यो
देवः सविता तानेष महिम्ना व्विमिमीते ॥ १८ ॥ '[4]देव
सवितः प्प्रसुव यज्ञं प्रसुव यज्ञपतिं भगाये'ति । असौ
वा ऽआदित्त्यो देवः सविता यज्ञो भगस्तमेतदाह प्प्रसुव
यज्ञं प्रसुव यज्ञपतिं भगायेति '[5]दिव्व्यो गन्धर्व्वः केतपूः
केतं नः पुनात्त्वि'त्त्यसौ वा ऽआदित्त्यो दिव्व्यो गन्धर्व्वोऽन्नं
केतोऽन्नपूरन्नं नः पुनात्त्वित्त्येत'[6]द्वाचस्प्पतिर्व्वाचं नः स्वद-
त्त्वि'ति व्वाग्वा ऽइदं कर्म्म प्प्राणो व्वाचस्प्पतिः प्प्राणो न-
ऽइदं कर्म्म स्वदत्त्वित्त्येतत् ॥ १९ ॥ '[7]इमं नो देव सवित-
र्य्यज्ञं प्रणये'ति । असौ वा ऽआदित्त्यो देवः सविता यद्
वा ऽएष यज्ञियं कर्म्म प्प्रणयति तदनार्त्तᳬ स्वस्त्युदृचम-
श्नुते '[8]देवाव्व्यमि'ति यो देवानवदित्त्येत'[9]त्सखिविदᳬ सत्रा-
जितं धनजितᳬ स्वर्ज्जितमि'ति य ऽएतत्सर्व्वं व्विन्दादित्त्ये-
तदृचे'[10]त्यृचां स्तोमᳬ समर्द्धय गायत्रेण रथन्तरं बृहद्गायत्र-
वर्त्तनी'ति सामानि '[11]स्वाहे'ति यजूᳬषि सैषा त्रयी व्विद्या

(१) शु० सं० अ० ११ क० ६ । (२) शु० सं० अ० ११ क० ६ । (३) शु० सं० अ० ११ क० ६ । (४) शु० सं० अ० ११ क० ७ । (५) शु० सं० अ० ११ क० ७ । (६) शु० सं० अ० ११ क० ७ । (७) शु० सं० अ० ११ क० ८ । (८) शु० सं० अ० ११ क० ८ । (९) शु० सं० अ० ११ क० ८ । (१०) शु० सं० अ० ११ क० ८ । (११) शु० सं० अ० ११ क० ८ ।

प्प्रथमं जायते यथैवाऽदोऽमुत्राऽजायतैवमथ यः सोऽग्नि-रसृज्यतैष स योऽत ऽऊर्द्ध्वमग्निश्चीयते ॥ २० ॥ तान्येतान्यष्टौ सावित्राणि । अष्टाक्षरा गायत्री गायत्रोऽग्नि-र्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतद्भूतो भूतᳬ सिञ्चति तानि नव भवन्ति स्वाहाकारो नवमो नव दिशो दिशोऽग्निर्नव प्प्राणाः प्प्राणा ऽअग्निर्यावानग्निर्यावत्य मात्रा तावतैवैनमेतद्भूतो भूतᳬ सिञ्चति तानि दश भवन्त्या-हुतिर्द्दशमी दशाक्षरा विराड्विराडग्निर्द्दश दिशो दिशो-ऽग्निर्द्दश प्प्राणाः प्प्राणा ऽअग्निर्यावानग्निर्यावत्यस्य मात्रा तावत्तद्भवति ॥ २१ ॥ एतस्यामाहुत्याᳬ हुतायाम् । अग्निर्द्देवेभ्य ऽउदक्रामत्ते देवा ऽअब्रुवन्पशुर्व्वा ऽअग्निः पशुभिरिममन्विच्छाम स स्वाय रूपायाऽविर्भविष्यतीति तं पशुभिरन्वैच्छन्त्स स्वाय रूपायाऽविरभवत्तस्मादु हैतत्पशुः स्वाय रूपायाऽविर्भवति गौर्वा गवेऽश्वो वाऽश्वाय पुरुषो वा पुरुषाय ॥ २२ ॥ तेऽब्रुवन् । यद्यह सर्वैरन्वेषिष्यामो यातयामा ऽअनुपजीवनीया भविष्यन्ति यद्यु ऽअसर्वैरसर्वमनुवेत्स्याम ऽइति त ऽएतमेकं पशुं द्वाभ्यां पशुभ्यां प्रत्यपश्यन्रासभं गोश्चाऽवेश्च तद्यदेतमेकं पशुं द्वाभ्यां पशुभ्यां प्रत्यपश्यँस्तस्मादेष ऽएकः सन्द्वि-रेताः ॥ २३ ॥ अनड्वा पुरुषं पुरुषात् । एष ह वा ऽअनड्वा-पुरुषो यो न देवानवति न पितॄन्न मनुष्यास्तँ सर्वैरह पशुभिरन्वैच्छन्नो यातयामा ऽअनुपजीवनीया ऽअभवन् ॥ २४ ॥ त्रिभिरन्विच्छति । त्रिवृदग्निर्यावानग्निर्यावत्यस्य

मात्रा तावतैवैनमेतदुन्विच्छति ते पञ्च सम्पदा भवन्ति पञ्चचितिकोऽग्निः पञ्चर्त्तवः संवत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावत्तद्भवति ॥ २५ ॥ ते मौञ्जीभिरभिधानीभिरभिहिता भवन्ति । अग्निर्देवेभ्यऽउदक्रामत्स मुञ्जं प्राऽऽविशत्तस्मात्स सुषिरस्तस्माद्वेवाऽन्तरतो धूमरक्त ऽइव सैषा योनिरग्नेर्यन्मुञ्जोऽग्निरिमे पशवो न वै योनिर्गर्भᳪहिनस्त्यहिᳪसायै योनेर्वै जायमानो जायते योनेर्जायमानो जायाता ऽइति ॥ २६ ॥ त्रिवृतो भवन्ति । त्रिवृद्ध्यग्निरश्वाभिधानीकृता भवन्ति सर्वतो वा ऽअश्वाभिधानी मुखं परिशेते सर्वतो योनिर्गर्भं परिशेते योनिरूपमेतत्क्रियते ॥ २७ ॥ ते प्राञ्चस्तिष्ठन्ति । अश्वः * प्रथमोऽथ रासभोऽथाऽजऽएवᳪ ह्येतेऽनुपूर्वं यद्वै तदश्रु सङ्क्षरितमासीदेष सोऽश्वोऽथ यत्तद्रसदिवैष रासभोऽथ यः स कपाले रसो लिप्तऽआसीदेष सोऽजोऽथ यत्तत्कपालमासीदेषा सा मृद्यामेतदाहरिष्यन्तो भवन्त्येतेभ्यो वा ऽएष रूपेभ्योऽग्रेऽसृज्यत तेभ्य ऽएवैनमेतज्जनयति ॥ २८ ॥ ते दक्षिणतस्तिष्ठन्ति । एतद्वै देवा ऽअबिभयुर्यद्वै नो यज्ञं दक्षिणतो रक्षाᳪसि नाष्ट्रा न हन्युरिति त ऽएतं वज्रमपश्यन्नमुमेवाऽऽदित्यमसौ वा ऽआदित्य ऽएषोऽश्वस्त ऽएतेन वज्रेण दक्षिणतो रक्षाᳪसि नाष्ट्रा ऽअपहत्याऽभयेऽनाष्ट्रऽएतं यज्ञमतन्वत तथैवैतद्यजमान ऽएतेन वज्रेण

* का० श्रौ० सू० १६. २. ४ ।

दक्षिणतो रक्षाᳫँसि नाष्ट्रा ऽअपहत्याऽभयेऽनाष्ट्र ऽएतं यज्ञं तनुते ॥२९॥ दक्षिणत ऽआहवनीयो भवति । *उत्तरत ऽएषाऽभ्रिरुपशेते व्वृषा वा ऽआहवनीयो योषाऽभ्रिर्द्दक्षिणतो वै व्वृषा योषामुपशेतेऽरत्निमात्रेऽरत्निमात्राद्धि व्वृषा योषामुपशेते ॥ ३० ॥ सा वैणवी स्यात् । अग्निर्द्देवेब्भ्य ऽउदक्रामत्स व्वेणुं प्राऽऽविशत्तस्मात्स सुषिरः स ऽएतानि व्वर्म्माण्यभितोऽकुरुत पर्व्वाण्यनानुप्रज्ञानाय यत्र-यत्र निर्द्ददाह तानि कल्माषाण्यभवन् ॥ ३१ ॥ सा कल्माषी स्यात् । सा ह्याग्नेयी यदि कल्माषीं न व्विन्देदप्यकल्माषी स्यात्सुषिरा तु स्यात्सैवाऽऽग्नेयी सैषा योनिरग्नेर्य्यद्वेणुरग्निरियं मृन्न वै योनिर्ग्गर्ब्भᳫँ हिनस्त्यहिᳫँसायै योनेर्वै जायमानो जायते योनेर्ज्जायमानो जायाता ऽइति ॥ ३२ ॥ प्रादेशमात्री स्यात् । प्रादेशमात्रᳫँ हीदमभि व्वाग्वदत्यरत्निमात्री त्वेव भवति बाहुर्व्वा ऽअरत्निर्बाहुन्नो वै व्वीर्य्यं क्रियते व्वीर्य्यसम्मितैव तद्भवति ॥ ३३ ॥ अन्यतः †क्ष्णुत्स्यात् । अन्यतरतो हीदं व्वाचः क्ष्णुतमुभयतः क्ष्णुत्त्वेव भवत्युभयतो हीदं व्वाचः क्ष्णुतं यदेनया दैवं च व्वदति मानुषं चाऽथो यत्सत्यं चाऽनृतं च तस्मादुभयतःक्ष्णुत् ॥ ३४ ॥ यद्वेवोभयतःक्ष्णुत् । अतो वा ऽअब्भ्रेर्व्वीर्य्यं यतोऽस्यै क्ष्णुतमुभयत ऽएवाऽस्यामेतद्वीर्य्यं दधाति ॥ ३५ ॥ यद्वेवोभयतःक्ष्णुत् । एतद्वा ऽएनं देवा ऽअनु-

* का० श्रौ० सू० १६, २. ५ ।

† "उभयतः क्ष्णूमन्यतरः क्ष्णूं वा" ( आप० श्रौ० सू० १६. १. ७ ) ।

विद्यैभ्यो लोकेभ्योऽखनँस्तथैवैनमयमेतदनुविद्यैभ्यो लोकेभ्यः खनति ॥ ३६ ॥ स यदिति खनति । तदेनमस्माँल्लोकात्खनत्यथ यदूर्ध्वं चरति तदमुष्माल्लोकादथ यदन्तरेण सञ्चरति तदन्तरिक्षलोकात्सर्वेभ्य ऽएवैनमेतदेभ्यो लोकेभ्यः खनति ॥ ३७ ॥ * तामादत्ते । देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे गायत्रेण च्छन्दसाऽङ्गिरस्वदि[1]ति सवितृप्रसूतऽएवैनामेतद्देताभिर्देवताभिरादत्ते गायत्रेण च्छन्दसाऽथोऽअस्यां गायत्रं छन्दो दधाति 'पृथि[2]व्याः सधस्थादग्निं पुरीष्यमङ्गिरस्वदाभरे'ति पशवो वै पुरीषं पृथिव्या ऽउपस्थादग्निं पशव्यमग्निवदाभरेत्येत'त्त्रै[3]ष्टुभेन च्छन्दसाऽङ्गिरस्वदि'ति तदेनां त्रैष्टुभेन च्छन्दसाऽऽदत्तेऽथोऽस्यां त्रैष्टुभं छन्दो दधाति ॥ ३८ ॥ 'अ[4]भ्रिरसी'ति । अभ्रिर्ह्येषा तदेनः सत्येनाऽऽदत्ते 'ना[5]र्यसीति' वज्रो वा ऽअभ्रिर्योषा नारी न वै योषा कञ्चन हिनस्ति शमयत्येवैनामेतदहिंसायै 'त्व[6]या वयमग्निः शकेम खनितुः सधस्थ ऽए'तीदं वै सधस्थं त्वया वयमग्निः शकेम खनितुमस्मिन्त्सधस्थऽइत्येत'ज्जा[7]गतेन च्छन्दसाऽङ्गिरस्वदि'ति तदेनां जागतेन छन्दसाऽऽदत्तेऽथो ऽअस्यां जागतं छन्दो दधाति ॥ ३९ ॥ त्रिभिरादत्ते । त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतै-

---

* का० श्रौ० सू० १६. २. ८ क०।

(१) शु० सं० अ० ११ क० ९। (२) शु० सं० अ० ११ क० ९। (३) शु० सं० अ० ११ क० ९। (४) शु० सं० अ० ११ क० १०। (५) शु० सं० अ० ११ क० १०। (६) शु० सं० अ० ११ क० १०। (७) शु० सं० अ० ११ क० १०।

वैनामतद्दादत्ते त्रिभिरादायाऽथैनां * चतुर्थेनाऽभिमन्त्रयत-ऽएतद्वा ऽएनां देवास्त्रिभिरादायाऽथाऽस्यां चतुर्थेन वीर्य्यं-मदधुस्तथैवैनामयमेतत्त्रिभिरादायाऽथाऽस्यां चतुर्थेन वीर्य्यं दधाति ॥ ४० ॥ 'हस्त ऽआधाय सवित'ति । हस्ते ह्यस्या-ऽऽहिता भवति 'बिभ्रदभ्रिमि'ति बिभर्त्ति ह्येनाᳬ 'हिरण्य-यीमि'ति हिरण्मयी ह्येषा या छन्दोम 'य्यग्नेर्ज्ज्योतिर्न्निचाय्ये'-त्यग्नेर्ज्ज्योतिर्दृष्ट्वेत्येत 'त्पृथिव्या ऽअध्याभरदि'ति पृथिव्यै ह्येनदध्याभर 'त्यानुष्टुभेन च्छन्दसाऽङ्गिरस्वदि'ति तदेना-मानुष्टुभेन च्छन्दसाऽऽदत्तेऽथो ऽअस्यामानुष्टुभं छन्दो दधाति तान्येतान्येव छन्दाᳬस्येषाऽभ्रिरारम्भायैवेयं वैणवी क्रियते ॥ ४१ ॥ ताᳬ हैके † हिरण्मयीं कुर्वन्ति । हिरण्य-यीति वा ऽअभ्युक्तेति न तथा कुर्य्याद्यद्वा ऽएषा छन्दाᳬ-सि तेनैषा हिरण्यममृतᳬ हिरण्यममृतानि च्छन्दाᳬसि ॥ ४२ ॥ तां चतुर्भिरादत्ते । चतुरक्षरा वै सर्वा वाग् वागि-त्येकमक्षरमक्षरमिति त्र्यक्षरं तद्यत्तद्वागित्येकमक्षरं सैवैषा-ऽनुष्टुबुत्तमा सा साऽथ यदक्षरमिति त्र्यक्षरमेतानि तानि पूर्वाणि यजूᳬषि सर्वयैवैतद्वाचाऽग्निं खनति सर्वया वाचा सम्भरति तस्माच्चतुर्भिः ॥ ४३ ॥ यद्वेव चतुर्भिः । चतस्रो वै दिशश्चतसृषु तद्दिक्षु वाचं दधाति तस्माच्चत-

* का० श्रौ० सू० १६. २. ८ ख।

(१) शु० सं० अ० ११ क० ११। (२) शु० सं० अ० ११ क० ११। (३) शु० सं० अ० ११ क० ११। (४) शु० सं० अ० ११ क० ११। (५) शु० सं० अ० ११ क० ११। (६) शु० सं० अ० ११ क० ११।

† का० श्रौ० सू० १६. २. ६।

सृषु दिक्षु वाग्वदति छन्दोभिश्च यजुर्भिश्चाऽऽदत्ते तदष्टौ चतस्रो दिशश्चतस्रोऽवाऽन्तरदिशः सर्वासु तद्दिक्षु वाचं दधाति तस्मात्सर्वासु दिक्षु वाग्वदति ॥ ४४ ॥ (A)

तृतीयाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



[ अश्वादि-पञ्चपशूनामभिमन्त्रणादि ]

हस्त ऽएषाऽग्निर्भवत्यथ पशूनभिमन्त्रयते । एतद्वाऽएषु देवा ऽअन्वेषिष्यन्तः पुरस्ताद्वीर्य्यमदधुस्तथैवैष्वयमेतदन्वेषिष्यन्पुरस्ताद्वीर्य्यं दधाति ॥ १ ॥ † सोऽश्वमभिमन्त्रयते । 'प्रतूर्त्तं वाजिन्नाद्रवे'ति यद्वै क्षिप्रं तत्तूर्त्तमथ यत्क्षिप्रात्क्षेपीयस्तत्प्रतूर्त्तं 'वरिष्ठामनु संवतमि'तीयं वै वरिष्ठा संवदिमामनु संवतमित्येत'द्दिवि ते जन्म परममन्तरिक्षे तव नाभिः पृथिव्यामधि योनिरिदि'ति तदेनमेता देवताः करोत्यग्निं वायुमादित्यं तदश्वे वीर्य्यं दधाति ॥ २ ॥ अथ रासभम् । 'युञ्जाथाᳪं रासभं युवमि'त्यद्धर्युं चैतद्यजमानं चाहा'ऽस्मिन्न्यामे वृषण्वसू' ऽइत्यस्मिन्कर्म्मणि वृषण्वसू ऽइत्येत'दग्निं भरन्तमस्मयुमि'त्यग्निं भरन्तमस्मत्प्रेषितमित्येतत्तद्रासभे वीर्य्यं दधाति ॥ ३ ॥ अथाऽजम् । 'योगे-योगे तवस्तरं वाजे-वाजे हवामह'

(A) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ८. ३. १; कठ० १५. ११. १६, १; मै० सं० ११. ७. १; तै० सं० ४. १. १।

† का० श्रौ० सू० १६. २. ९।

(१) शु० सं० अ० ११ क० १२। (२) शु० सं० अ० ११ क० १२। (३) शु० सं० अ० ११ क० १२। (४) शु० सं० अ० ११ क० १३। (५) शु० सं० अ० ११ क० १३। (६) शु० सं० अ० ११ क० १३। (७) शु० सं० अ० ११ क० १४।

ऽइत्यन्नं वै व्वाजः कर्म्मणि-कर्म्मणि तवस्तरमन्नेऽन्ने हवामह ऽइत्येत'त्सखाय[1] ऽइन्द्रमूतय ऽइतीन्द्रियवन्तमूतयऽइत्येतत्तदजे व्वीर्य्यं दधाति ॥ ४ ॥ त्रिभिरभिमन्त्रयते । त्रिवृदग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैष्वेतद्वीर्य्यं दधाति ॥ ५ ॥ अथैनान्प्राच ऽउत्क्रमयति । तदेनमेतैः पशुभिरन्न्विच्छति नोपस्पृशत्यग्निरेष यत्पशवो नेन्नमाऽयमग्निर्हिनसदिति ॥ ६ ॥ सो*ऽश्वमुत्क्रमयति । 'प्रतूर्वन्नेह्यव[2]क्रामन्नशस्तीरि'ति पाप्मा वा ऽअशस्तिस्त्वरमाण ऽएह्यवक्रामन् पाप्मानमित्येत'द्रुद्रस्य[3] गाणपत्यं मयोभूरेही'ति रौद्रा वै पशवो या ते देवता तस्यै गाणपत्यं मयोभूरेहीत्येतत्तदेनमश्वेनाऽन्न्विच्छति ॥ ७ ॥ अथ रासभम् । उर्व्वन्तरिक्षं व्वीहि स्वस्तिगव्यूतिरभयानि कृण्वन्नि'ति[4] यथैव यजुस्तथा बन्धुः 'पूष्णा सयुजा सहे'तीयं[5] वै पूषाऽनया सयुजा सहेत्येतत्तदेनं रासभेनाऽन्न्विच्छति ॥ ८ ॥ अथाऽजम् । 'पृथिव्याः सधस्थादग्निं पुरीष्यमङ्गिर[6]स्वदाभरे'ति पृथिव्या ऽउपस्थादग्निं पशव्यमग्निवदाभरेत्येतत्तदेनमजेनाऽन्न्विच्छति ॥ ९ ॥ त्रिभिरन्न्विच्छति । त्रिवृदग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैनमेतदन्न्विच्छति त्रिभिः पुरस्तादभिमन्त्रयते तत्षट् षडृतवः संव-

(१) शु० सं० अ० ११ क० १४।

* का० श्रौ० सू० १६. २. १०।

(२) शु० सं० अ० ११ क० १५। (३) शु० सं० अ० ११ क० १५। (४) शु० सं० अ० ११ क० १५। (५) शु० सं० अ० ११ क० १५। (६) शु० सं० अ० ११ क० १६।

त्सरः संवत्सरोऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावत्तद्भवति ॥१०॥ (B)

तृतीयाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

माध्यन्दिनीये शतपथब्राह्मणे द्वितीयः प्रपाठकः ॥ २ ॥
कण्डिकासंख्या ॥ १०४ ॥



[ पिण्डम्प्रति ब्रह्मादीनामभिगमनादि ]

प्रदीप्ता ऽएतेऽग्नयो भवन्ति । अथ मृदमच्छयन्तीमे वै लोका ऽएतेऽग्नयस्ते यदा प्प्रदीप्ता ऽअथैत ऽइमे लोकाः पुरो वा ऽएतदेभ्यो लोकेभ्योऽग्रे देवाः कर्म्माऽऽग्वैच्छँस्तद्यदेतानग्नीनतीत्य मृदमाहरति तदेनं पुरैभ्यो लोकेभ्योऽन्विच्छति ॥ १ ॥ प्राञ्चो यन्ति । प्राची हि दिगग्नेः स्वायामेवैनमेतद्दिश्यन्विच्छति स्वायां दिशि विन्दति ॥ २ ॥ ते * प्प्रयन्ति । 'अग्निं पुरीष्यमङ्गिरस्वदच्छेम' ऽइत्यग्निं पशव्यमग्निवदच्छेम ऽइत्येतत् ॥ ३ ॥ † अथाऽनड्वापुरुषमीक्षते । 'अग्निं पुरीष्यमङ्गिरस्वद्भरिष्याम' ऽइत्यग्निं पशव्यमग्निवद्भरिष्याम ऽइत्येतत्तदेनमनड्वापुरुषेणाऽन्विच्छति ॥ ४ ॥ अथ ‡ वल्मीकवपा सुषिरा

(B) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—का० श० ८. ३. २; कठ० सं० १८. १६, १-३; मै० सं० ११. ७. २; तै० सं० ४. १. २।

* का० श्रौ० सू० १६. २. ११।

(१) शु० सं० अ० ११ क० १५।

† का० श्रौ० सू० १६. २. १३।

(२) शु० सं० अ० ११ क० १६।

‡ का० श्रौ० सू० १६. २. १४।

ऽव्यद्धे निहिता भवति । तामन्वीक्षत ऽइयं वै वल्मीक-वपेयमु वा ऽइमे लोका ऽएतद्वा ऽएनं देवा ऽएषु लोकेषु विग्राहमैच्छँस्तथैवैनमयमेतदेषु लोकेषु विग्राहमिच्छति ॥ ५ ॥ 'अन्वग्निरुषसामग्रमख्यदि'ति[1] । तदेनमुषःस्वै-च्छ'न्नन्वहानि प्रथमो जातवेदा' ऽइति[2] तदेनमहःस्वैच्छ-न्ननु[3] सूर्यस्य पुरुत्रा च रश्मीनि'ति तदेनꣳ सूर्यस्य रश्मिष्वैच्छ'न्ननु द्यावापृथिवी ऽआततन्थे'ति[4] तदेनं द्यावा-पृथिव्योरैच्छँस्तमविन्दँस्तथैवैनमयमेतद्विन्दति तं रुयद्वा परापश्यत्यथ तामवाऽस्यत्यागच्छन्ति मृदम् ॥६॥ * अथा-ऽश्वमभिमन्त्रयते। एतद्वै देवा ऽअब्रुवन्पाप्मानमस्याऽपह-नामेति श्रमो वै पाप्मा श्रममस्य पाप्मानमपहनामेति तस्य श्रमं पाप्मानमपाऽघ्नँस्तथैवाऽस्याऽयमेतच्छ्रमं पाप्मा-नमपहन्ति ॥ ७ ॥ 'आगत्य[5] वाज्यध्वानमि'ति । आगतो ह्यस्याऽध्वा भवति 'सर्वा मृधो विधूनुत'[6] ऽइति पाप्मा वै मृधः सर्वान्पाप्मनो विधूनुत ऽइत्येतत्तस्मादु हैतदश्वः † स्यत्वा 'विधूनुतेऽग्निꣳ[7] सधस्थे महति चक्षुषा निचि-कीष' ऽइतीदं वै महत्सधस्थमग्निमस्मिन्महति सधस्थे चक्षुषा दिदृक्षत ऽइत्येतत् ॥ ८ ॥ अथैनमाक्रमयति । एतद्वा ऽएष ऽएतं देवेभ्योऽनुविद्य प्राऽब्रवीद्यथाऽयमिहेवे-

(१) शु० सं० अ० ११ क० १७। (२) शु० सं० अ० ११ क० १७। (३) शु० सं० अ० ११ क० १७। (४) शु० सं० अ० ११ क० १७।

* का० श्रौ० सू० १६. २. १६।

† 'स्यन्त्वा' इति पाठः 'ग च' पुस्तकयोः।

(५) शु० सं० अ० ११ क० १८। (६) शु० सं० अ० ११ क० १८। (७) शु० सं० अ० ११ क० १८।

त्येवम् ॥ ९ ॥ यद्वेवाऽऽक्रमयति । एतद्वै देवा ऽअबिभयु-र्यद्वै न ऽइममिह रक्षाᳬंसि नाष्ट्रा न हन्न्युरिति तस्स्मा-ऽएतं व्वज्ज्रमुपरिष्ट्ठादभिगोप्तारमकुर्व्वन्नमुमेवाऽऽदित्त्यमसौ वा ऽआदित्त्य ऽएषोऽश्वस्तथैवाऽऽस्म्माऽअयमेतं व्वज्ज्रमुपरि-ष्ट्ठादभिगोप्तारं करोति ॥ १० ॥ * 'आक्क्रम्म्य [1] व्वाजिन् । पृथिवीमग्निमिच्छ रुचा त्वमि'ति चक्षुर्व्वै रुगाक्क्रम्म्य त्वं व्वाजिन्न्पृथिवीमग्निमिच्छ चक्षुषेत्त्येत'द्भूम्म्या [2] व्वृत्त्वाय नो ब्रूहि यतः खनेम तं व्वयमि'ति भूमेस्तत्स्पाशयित्त्वाय नो ब्रूहि यत ऽएनं खनेमेत्त्येतत् ॥ ११ ॥ अथैनमुन्न्मृशति † । एतद्वा ऽएनं देवाः प्प्रोचिवाᳬंसं व्वीर्य्येण समार्द्धयँस्तथैवैनम-यमेतत्प्प्रोचिवाᳬंसं व्वीर्य्येण समर्द्धयति 'द्यौस्ते [3] पृष्ठं पृथिवी सधस्त्थमात्त्माऽन्तरिक्षᳬं समुद्रो योनिरि'तीत्त्थमसीत्त्थमसी-त्त्येवैतदाह 'व्विख्याय [4] चक्षुषा त्वमभितिष्ठ पृतन्न्यत' ऽइति व्विख्याय चक्षुषा त्वमभितिष्ठ सर्व्वान्न्पाप्प्मन ऽइत्त्येतन्नो-पस्प्पृशति व्वज्ज्रो वा ऽअश्वो नेन्न्माऽयं व्वज्ज्रो हिनसदिति ॥ १२ ॥ अथैनमुत्क्रमयति ‡ । एतद्वै देवा ऽअब्रुवन्न्किमि-ममभ्युत्क्रमिष्याम ऽइति महत्सौभगमिति तं महत्सौ-भगमभ्युदक्रमयँस्तथैवैनमयमेतन्न्महत्सौभगमभ्युत्क्रमय-'त्त्युत्क्रामि [5] महते सौभगाये'त्त्युत्क्राम महते सौभगमित्त्येत-

* का० श्रौ० सू० १६. २. १७ ।
( १ ) शु० सं० अ० ११ क० १९ । ( २ ) शु० सं० अ० ११ क० १९ ।
† का० श्रौ० सू० १६. २. १८ ।
( ३ ) शु० सं० अ० ११ क० २० । ( ४ ) शु० सं० अ० ११ क० २० ।
‡ का० श्रौ० सू० १६. २. १९ ।
( ५ ) शु० सं० अ० ११ क० २१ ।

त्तस्म्मादु हैतदश्वः पशूनां भगितमोऽस्म्मादास्थानादि'ति यत्रैतत्तिष्ठसीत्येतद् 'द्रविणोदा' ऽइति द्रविणᳯ ह्येभ्यो ददाति 'वाजिन्निति' वाजी ह्येष 'वयᳯ स्याम सुमतौ पृथिव्व्या ऽअग्निं खनन्त ऽउपस्त्थे ऽअस्या' ऽइति वयमस्यै पृथिव्व्यै सुमतौ स्यामाऽग्निमस्या ऽउपस्त्थे खनन्त-ऽइत्येतत् ॥ १३ ॥ अथैनमुत्क्रान्तमभिमन्त्रयते * । एतद्वा-ऽएनं देवाः प्प्रोचिवाᳯसं स्वधया ददिवाᳯसं वन्देतैवमुपाऽस्तु-वन्नुपाऽमहयँस्तथैवैनमयमेतदुपस्तौत्युपमहय'त्युदक्रमीदि'-त्युद्ध्यक्रमीद् 'द्रविणोदा' ऽइति द्रविणᳯ ह्येभ्यो ददाति 'वाज्ज्यर्वे'ति वाजी च ह्येषोऽर्वाचा'ऽकः सुलोकᳯ सुकृतं पृथिव्व्यामि'त्यकरः सुलोकᳯ सुकृतं पृथिव्व्यामित्येत-'त्ततः खनेम सुप्प्रतीकमग्निमि'ति तत ऽएनं खनेमेत्त्ये-तत्सुप्प्रतीकमिति सर्व्वतो वा ऽअग्निः सुप्प्रतीकः 'स्वोरु-हाणा ऽअधि नाकमुत्तममि'ति स्वर्ग्गो वै लोको नाकः स्वर्ग्गं लोकᳯ रोहन्तोऽधि नाकमुत्तममित्येतत्तं दक्षिणतोप-सङ्क्रमयति यत्रेतरौ पशू भवतस्ते दक्षिणतः प्प्राञ्चस्ति-ष्ठन्ति स य ऽएवाऽमुत्र दक्षिणत स्त्थानस्य बन्धुः सोऽत्र ॥१४॥ अथोपविश्श्य मृदमभिजुहोति। एतद्वै देवा ऽअब्रुवँस्त्ते-

---

( १ ) शु० सं० अ० ११ क० २१ । ( २ ) शु० सं० अ० ११ क० २१ । ( ३ ) शु० सं० अ० ११ क० २१ । ( ४ ) शु० सं० अ० ११ क० २१ । ( ५ ) शु० सं० अ० ११ क० २१ ।

* का० श्रौ० सू० १६. २. २० ।

( ६ ) शु० सं० अ० ११ क० २२ । ( ७ ) शु० सं० अ० ११ क० २२ । ( ८ ) शु० सं० अ० ११ क० २२ । ( ९ ) शु० सं० अ० ११ क० २२ । ( १० ) शु० सं० अ० ११ क० २२ ।

तयच्चमिति चितिमिच्छतेति वाऽव तदब्रुवँस्ते चेतयमाना-ऽएतामाहुतिमपश्यँस्तामजुहवुस्ताᳫं हुत्वेमाँल्लोकानुखामपश्यन् ॥ १५ ॥ तेऽब्रुवन् । चेतयध्वमेवेति चितिमिच्छतेति वाऽव तदब्रुवँस्ते चेतयमाना ऽएतां द्वितीयामाहुतिमपश्यँस्तामजुहवुस्ताᳫं हुत्वा विश्वज्योतिषोऽपश्यन्नेता देवता ऽअग्निं वायुमादित्यमेता ह्येव देवता विश्वज्ज्योतिस्तथैवैतद्यजमान ऽएते ऽआहुती हुत्वेमाँश्च लोकानुखां पश्यत्येताश्च देवता विश्वज्योतिषो व्व्यतिषक्ताभ्यां जुहोतीमाँश्च तल्लोकानेताश्च देवता व्व्यतिषजति ॥ १६ ॥ यद्वेवैते ऽआहुती जुहोति । मृदं च तदपश्च प्प्रीणाति ते ऽइष्ट्वा प्प्रीत्वाऽथैने सम्भरति व्व्यतिषक्ताभ्यां जुहोति मृदं च तदपश्च व्व्यतिषजति ॥ १७ ॥ आज्येन * जुहोति । वज्रो वा ऽआज्यं वज्रमेवाऽस्मा ऽएतदभिगोप्तारं करोत्यथो रेतो वा ऽआज्यᳫं रेत ऽएवैतत्सिञ्चति स्रुवेण व्वृषा वै स्रुवो व्वृषो वै रेतः सिञ्चति स्वाहाकारेण व्वृषा वै स्वाहाकारो व्वृषा वै रेतः सिञ्चति ॥ १८ ॥ 'आ त्वा जिघर्म्मि मनसा घृतेने'ति । आत्वा जुहोमि मनसा च 'घृतेन' चेत्येत'त्प्रतिक्षियन्तं भुवनानि विश्वे'ति प्प्रत्यङ् ह्येष सर्वाणि भुवनानि क्षियति 'पृथुं तिर्य्यञ्चा वयसा बृहन्तमि'ति पृथुर्वा ऽएष तिर्य्यङ्वयसो बृहन्धूमेन 'व्व्यचिष्ठमन्नै रभसं दृशानमि'त्यवकाशवन्तमन्नैरन्नादं दीप्प्यमानमित्येतत् ॥१९॥

* का० श्रौ० सू० १६. २. २२ क।

(१) शु० सं० अ० ११ क० २३। (२) शु० सं० अ० ११ क० २३। (३) शु० सं० अ० ११ क० २३। (४) शु० सं० अ० ११ क० २३। (५) शु० सं० अ० ११ क० २३।

'आ विश्वतः प्प्रत्यञ्चं जिघर्म्मी'ति । आ सर्वतः प्प्रत्यञ्चं जुहोमीत्त्येतद्'रक्षसा मनसा[2] तज्जुषेते'त्त्यहीडमानेन मनसा तज्जोषयेतेत्त्येत'न्मर्य्यश्री स्पृहयद्वर्ण्णो[3] ऽअग्नि'रि'ति मर्य्यश्रीर्ह्येष स्पृहयद्वर्ण्णोऽग्नि'र्न्नाऽभिमृशे तन्न्वा[4] जर्भुराण' ऽइति न ह्येषोऽभिमृशे तन्न्वा दीप्प्यमानो भवति ॥ २० ॥ द्वाभ्यामभिजुहोति । द्विपाद्यजमानो यजमानोऽग्निर्य्यावानग्निर्य्यावत्त्यस्य मात्रा तावतैवैनमेतद्धृतो भूतः सिञ्चत्त्याग्नेयीभ्यामग्निमेवैतद्धृतो भूतः सिञ्चति ते यदाग्नेय्यौ तेनाऽग्निरथ यत्त्रिष्टुभौ तेनेन्द्र ऽऐन्द्राग्नोऽग्निर्य्यावानग्निर्य्यावत्त्यस्य मात्रा तावतैवैनमेतद्धृतो भूतः सिञ्चतीन्द्राग्नी वै सर्व्वे देवाः सर्व्वदेवत्त्योऽग्निर्य्यावानग्निर्य्यावत्त्यस्य मात्रा तावतैवैनमेतद्धृतो भूतः सिञ्चति ॥ २१ ॥ * अश्वस्य † पदे जुहोति । अग्निरेष यदश्वस्तथो हाऽस्यैते ऽअग्निमत्त्येवाऽऽहुती हुते भवतः ॥ २२ ॥ अथैनं परिलिखति । मात्रामेवाऽस्मा ऽएतत्करोति यथैतावानसीत्त्येवम् ॥ २३ ॥ यद्वेवैनं परिलिखति । एतद्वै देवा ऽअबिभयुर्य्यद्वै न ऽइममिह रक्षाᳬसि नाष्ट्रा न हन्न्युरिति तस्मा ऽएतां पुरं पर्य्यश्रयँस्तथैवाऽस्मा ऽअयमेतां पुरं परिश्रयत्त्यभ्र्या वज्रो वा ऽअभ्रिर्व्वज्रमेवाऽस्मा ऽएतदभिगोप्तारं करोति सर्व्वतः परिलिखति सर्व्वत ऽएवाऽस्मा ऽएतं

(१) शु० सं० अ० ११ क० २४। (२) शु० सं० अ० ११ क० २४। (३) शु० सं० अ० ११ क० २४। (४) शु० सं० अ० ११ क० २४।

* अत्र शतम् २६००।

† का० श्रौ० सू० १६. २. २२. ख।

व्वज्रमभिगोप्तारं करोति त्रिष्कृत्वः * परिलिखति त्रिवृत-मेवाऽस्म्मा ऽएतं व्वज्रमभिमोप्तारं करोति ॥ २४ ॥ 'परि-व्वाजपतिः कविः । परि त्वाऽग्ने पुरं व्वयं, त्वमग्ने द्युभिरि'त्य-ग्निमेवाऽस्म्मा ऽएतदुपस्तुत्य व्वर्म्म करोति परिवतीभिः परीव हि पुर ऽआग्नेयीभिरग्निपुरामेवाऽस्म्मा ऽएतत्करोति सा हैषाऽग्निपुरा दीप्प्यमाना तिष्ठति तिसृभिस्त्रिपुर-मेवाऽस्म्मा ऽएतत्करोति तस्म्मादु हैतत्पुरां परमः रूपं यत्त्रिपुरः स वै व्वर्षीयसा-व्वर्षीयसा च्छन्दसा परां-परां लेखां व्वरीयसीं करोति तस्म्मात्पुरां परां-परा व्वरीयसी लेखा भवन्ति लेखा हि पुरः ॥ २५ ॥ अथैनमस्यां खनति । एतद्वै देवा ऽअबिभयुर्य्यद्वै न ऽइममिह रक्षाथ्ंसि नाष्ट्रा न हन्न्युरिति तस्म्मा ऽइमामेवाऽऽत्मानम कुर्वन्गुप्त्या ऽआ-त्माऽऽत्मानं गोप्स्यतीति सा समंबिला स्यात्तदस्येयमात्मा भवति यद्वेव समम्बिला योनिर्व्वा ऽइयः रेत ऽइदं यद्वै रेतसो योनिमतिरिच्च्यतेऽमुया तद्भवत्यथ यन्न्यूनं व्यृद्धं तदेतद्वै रेतसः समृद्धं यत्समम्बिलं चतुःस्त्रक्तिरेष कूपो भवति चतस्रो वै दिशः सर्वाभ्य ऽएवैनमेतद्दिग्भ्यः खनति ॥ २६ ॥ (c)

तृतीयाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

इति तृतीयोऽध्यायः ॥ ३ ॥



* का० श्रौ० सू० १६. २. २३ ।

( १ ) शु० सं० अ० ११ क० २५–२७ ।

(c) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ८. ३. २; कठ० सं० १९. १. ३; कपि० सं० ३०. १; मै० सं० ११. ७. २; तै० सं० ४. १. २ ।

[ मृत्खननम्, कृष्णाजिनास्तरणम्, पुष्करपर्णनिधानादिकं च ]

अथैनमतः * खनत्येव । एतद्वा ऽएनं देवा ऽअनुविद्याऽखनँस्तथैवैनमयमेतदनुविद्य खनति 'देवस्य त्वा सवितुः प्प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां पृथिव्याः सधस्थादग्निं पुरीष्यमङ्गिरस्वत्खनामी'ति सवितृप्प्रसूत ऽएवैनमेतदेताभिर्देवताभिः पृथिव्या ऽउपस्थादग्निं पशव्यमग्निवत्खनति ॥ १ ॥ 'ज्योतिष्मन्तं त्वाऽग्ने सुप्प्रतीकमि'ति । ज्योतिष्मान्वा ऽअयमग्निः सुप्प्रतीको'ऽजस्रेण भानुना दीद्यतमि'त्यजस्रेणाऽर्चिषा दीप्प्यमानमित्येत'च्छिवं प्रजाभ्योऽहिꣳसन्तं पृथिव्याः सधस्थादग्निं पुरीष्यमङ्गिरस्वत्खनाम' ऽइति शिवं प्रजाभ्योऽहिꣳसन्तं पृथिव्या ऽउपस्थादग्निं पशव्यमग्निवत्खनाम ऽइत्येतत् ॥ २ ॥ द्वाभ्यां खनति । द्विपाद्यजमानो यजमानोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतत्खनत्यथो द्वयꣳ ह्येवैतद्रूपं मृच्चाऽऽपश्च ॥३॥ स वै खनामि खनाम ऽइति खनति । खनामीति वा ऽएतं प्रजापतिरखनत्खनाम ऽइति देवास्तस्मात्खनामि खनाम ऽइति ॥ ४ ॥ स वा ऽअभ्र्या खनन् । वाचा खनामि खनामऽइत्याह वाग्वा ऽअभ्रिरारम्भायैवेयं वैणवी क्रियते वाचा वा ऽएतमभ्र्या देवा ऽअखनँस्तथैवैनमयमेतद्वाचैवाऽभ्र्या

* का० श्रौ० सू० १६. २. २४।

(१) शु० सं० अ० ११ क० २८। (२) शु० सं० अ० ११ क० २८। (३) शु० सं० अ० ११ क० २८। (४) शु० सं० अ० ११ क० २८। (५) शु० सं० अ० ११ क० २८।

